# विद्याधरी

## श्रीमदन्नम्भट्टविरचिततर्कसङ्ग्रहव्याख्या




रचयिता

म.म. गोडासुब्रह्मण्यशास्त्रिपादानाम्

अन्तेवासी

**देवदत्तशर्मा**




॥ श्रीः ॥

श्रीगणेशाय नमः।

श्रीभगवतीपरमेश्वर्यै नमः।

श्रीकामाक्षीपरमेश्वर्यै नमः।

श्रुत्वा च प्रतियोगितां जनकतावच्छेद्यतावृत्तिताः।
बालाः पङ्कजपत्रकोमलधियो भीत्या निवृत्ता बत।
तद्भीतिक्षपणे सुचित्रसचिवो भाषासुधालम्बनः।
सुब्रह्मण्यगुरुप्रसादजनितप्रज्ञः प्रवृत्तोस्म्यहम्॥

मात्सर्यमुत्सृज्य वचो निशम्य
त्रुटिं समुद्भाव्य च रीतिमेताम्।
शिष्यप्रबोधप्रवणां सुधीराः[१]
स्वाध्यापनेऽप्यध्वनि योजयध्वम्॥

स्वान्तरञ्जकदृष्टान्तकर्णया नौकयानया।
बालाः[२] सन्तीर्यतां कामं नवन्यायसुधानिधिः॥

जगति अनेकानि वस्तूनि सन्ति। पर्वताः, नद्यः, गृहाणि, मनुष्याः इतरे प्राणिनः वनानि नगराणि इत्यादीनि। तेषां ज्ञानेन बुद्धिः विशदा, विचारसमर्था भवति। परन्तु ते अनन्ताः अनेकविधाश्च। अतः सर्वेषां सर्वविधानां ज्ञानं दुःशकम्। अतः किञ्चन वस्तु यत् बहुषु वर्तते, तदादाय तेषां ज्ञापनाय पूर्वाचार्यैः यत्नः कृतः। यथा

| गुणः | गन्धः | शैत्यम् | औष्ण्यम् | स्पर्शः | शब्दः | सङ्ख्या | सङ्ख्या | ज्ञानम् | सङ्ख्या |
|---|---|---|---|---|---|---|---|---|---|
| ↑ | ↑ | ↑ | ↑ | ↑ | ↑ | ↑ | ↑ | ↑ | ↑ |
| द्रव्यम् | पृथिवी | जलम् | तेजः | वायुः | आकाशः | कालः | दिक् | आत्मा | मनः |

चि.स.१

---

१, २ - सम्बोधनम्

एतानि नव वस्तूनि गृह्णीमः। तेषु सर्वत्र कश्चित् गुणः (पृ.७२) अवश्यं वर्तते। गुणः इति वस्तु पृथिव्यां जले तेजसि... इत्येवं सर्वेषु वस्तुषु वर्तते इति गुणः अनुगतं वस्तु अथवा पदार्थः। अतः तमादाय एते नव पदार्थाः **द्रव्यमिति** संज्ञां लभन्ते। तथा च कञ्चन विशेषमादाय सः विशेषः येषु वर्तते तेषां, एकां संज्ञां कृत्वा आचार्यैः पदार्थबोधनाय यत्नः कृतः।

तत्र यः विशेषः गृहीतः सः बहुषु भवेत् एकस्मिन् वा भवेत्। बहुषु भवति चेत् बहूनां सा संज्ञा। यथा पृथिवी द्रव्यमिति उच्यते। जलमपि द्रव्यम्। समवायत्वमिति पदार्थः एकस्मिन्नेव वर्तते अतः एकस्यैव समवाय इति संज्ञा भवति। अतश्च अनन्तानामपि पदार्थानाम् अनेन उपायेन निरूपणं सुशकं भवति।

सङ्ग्रहादिग्रन्थेषु **सप्त पदार्थाः** इति यः विभागः दर्शितः सः इमां रीतिं बुद्धौ निधायैव कृतः।

[१]वात्स्यायनभाष्यादिग्रन्थेषु एवं वर्णयन्ति। प्रथमतः उद्देशः, ततः लक्षणम्,
२ ततः परीक्षा इति। उद्देशो नाम नामनिर्देशः। द्रव्यम् इति कथनम्, गुणः इति कथनम्। अत्र द्रव्यं कथं ज्ञातव्यमिति न निरूप्यते। केवलं संज्ञा उच्यते। अतः अयम् **उद्देशः**। केन वस्तुना द्रव्यं ज्ञातव्यम्? गुणेन। यत्र गुणः तद्द्रव्यमिति कथनं द्वितीयम्। तदेव **लक्षण**मिति उच्यते।

गुणः इति पदार्थः द्रव्ये वर्तते न वा, अस्ति चेत् सर्वत्र वर्तते न वा इत्यादिविचारः **परीक्षा**। तया च परीक्षया विचारः परिपूर्णः भवति। तर्कसङ्ग्रहे उद्देशभागः लक्षणभागः इति द्वयमेव वर्तते, न तु परीक्षाभागः। बालबोधनाय प्रवृत्तत्वात्।

*निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।*
*बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः॥*

तदादौ अन्नम्भट्टः ग्रन्थस्य निर्विघ्नपरिसमाप्तये मङ्गलाचरणं कृत्वा सप्त पदार्थान् नाम्ना निर्दिशति **द्रव्येति**।

---

१ - वात्स्यायनमहर्षिः गोतमप्रणीतन्यायसूत्राणां भाष्यकारः।

*द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः ।*

**द्रव्यं गुणः कर्म सामान्यं विशेषः समवायः अभावः**

इमे सप्त पदार्थाः।

तत्र पदार्थोद्देशे *नामनिर्देशे* आदौ द्रव्यं निर्दिष्टम्। कुतः ? यतः इतरे सर्वेऽपि द्रव्यमाश्रित्य तिष्ठन्ति।

तत्र अस्ति विशेषः। द्रव्ये गुणः तिष्ठति इति यदि उच्यते तर्हि **द्रव्यं** अधः वर्तते **गुणः** द्रव्यस्य उपरि वर्तते इति ज्ञायते। यथा यज्ञदत्तः आसने वर्तते इत्युक्तौ यज्ञदत्तः उपरि, आसनम् अधः भवति इति ज्ञायते। तत्र आसनं यज्ञदत्तस्य भारं वहति।

### ✳ आधार-आधेयभावव्यवस्थापनम्

अत्रेदं कल्पयामः, आसनं प्राणि इति। तर्हि तत् आसनम् इदं चिन्तयेत्, **अहं यज्ञदत्तस्य भारं वहामि**। इयं भारवहनस्य चिन्ता एव **अधिकरणता, आधारता** इति वा उच्यते।

यज्ञदत्तः चिन्तयति **अहं भारं स्थापयामि** इति। इयं चिन्ता एव यज्ञदत्ते विद्यमाना **आधेयता** इत्युच्यते। यज्ञदत्तं विहाय कश्चित् अचेतनः वक्ष्यमाणः सङ्ख्यारूप-गुणः उपरि भवति चेत् अपि सः **गुणोहं भारं स्थापयामि** इति चिन्तयतीति आलोचयामः। अतः तादृशे पदार्थे आधेयता भवति। तथा आसने अधिकरणता वर्तते।




चि.स.२

प्रकृतेऽपि द्रव्यम् अधः अस्ति गुणश्च उपरि अस्तीति उक्तौ द्रव्ये **अधिकरणता**, गुणे च **आधेयता** अस्तीति आयातम्।

आसने अधिकरणता वर्तते इत्यमुं विषयं लघुना उपायेन कथं निरूपयामः?

तत्र **निष्ठ** इति, **वर्ति** इति, पदद्वयमुपकरोति। अतः आसननिष्ठा अधिकरणता आसनवर्तिनी अधिकरणता इति वाक्यद्वयं जातम्। तद्वदेव यज्ञदत्तनिष्ठ-आधेयता यज्ञदत्तवर्ति-आधेयता, इति च वाक्यद्वयम्।




चि.स.३

तत्र आधेयता, अधिकरणता, प्रतियोगित्वादयः वक्ष्यमाणाः वा साकाङ्क्षाः ससम्बन्धिकाः पदार्थाः। साकाङ्क्षः इत्यस्य कः अर्थः? यं श्रुत्वा एतत्सम्बन्धी अन्यः कः इति जिज्ञासा सर्वदैव भवति। यथा **रामः पुत्रः** इत्युक्तौ, कस्य इति जिज्ञासा जायते।






चि.स.४

अतः पुत्रत्वं, पितृत्वं, भार्यात्वम् इत्यादयः ससम्बन्धिकाः पदार्थाः। तथा एव आधेयता अधिकरणता इत्यादयः अपि ससम्बन्धिकाः। यज्ञदत्तः आधेयः इत्युक्तौ, कस्य इति जिज्ञासा भवति। आसनमधिकरणम् इत्युक्तौ, कस्य इति जिज्ञासा भवति। अतः एते अपि आधेयता, अधिकरणता इत्यादयः ससम्बन्धिकाः, अन्यं पदार्थं सर्वदा अपेक्षन्ते।[१]

---

१ - एतद्विपरीतं यज्ञदत्तः अस्ति इत्युक्तौ कस्य? इति आकाङ्क्षा न सर्वदा भवति अतः यज्ञदत्तः निराकाङ्क्षः।




चि.स.५

तत्र साकाङ्क्षः पदार्थः यम् अपेक्षते सः निरूपक इत्युच्यते ।




चि.स.६

### ✳ निरूप्यनिरूपकभावव्यवस्थापनम्

तत्र लोके **निरूपकः** इत्यनेन यः वदति सः बोध्यते । यस्य विषये उच्यते सः निरूप्यः। तत्र साम्प्रदायिकमुदाहरणं यथा **व्यासः कृष्णकथां निरूपयति ।**






चि.स.७

अत्रापि पूर्ववत् निष्ठपदप्रयोगेण व्यासनिष्ठनिरूपकता निरूप्यता तु कृष्णकथानिष्ठा इति निरूपणं भवति।

अस्मिन् उदाहरणे व्यास एव निरूपकः, कृष्णकथा च निरूप्या एव। परन्तु आधारता[१] आधेयता च इत्यनयोः परस्परं निरूपकता निरूप्यता च भवति। आधेयता केन निरूपिता इति प्रश्न इव अधिकरणता केन निरूपिता इति प्रश्नोऽपि खलु तुल्यः। अतः उभयोः परस्परं निरूप्यनिरूपकभावः भवति।

१ - अधिकरणता




चि.स.८

इह यज्ञदत्तः आधेयतावान् इति वक्तुं आश्रय इति पदमुपकरोति । तथा च आसननिष्ठ-अधिकरणतानिरूपित-आधेयताश्रयः यज्ञदत्तः इति, यज्ञदत्तनिष्ठ-आधेयतानिरूपित-अधिकरणताश्रयः आसनम् इति उभयं साधु। एवं च निरूप्यनिरूपकसम्बन्धः[१] ज्ञातश्चेत् आधाराधेयसम्बन्धः[२] अपि ज्ञायते। तथा च प्रकृतेऽपि द्रव्ये गुणः तिष्ठति इत्यत्र आधाराधेयभावः सुज्ञेयः।






चि.स.९

एवं सति द्रव्यं प्रथमतः कुतः निर्दिष्टम् इत्यस्य समाधानम् **इतरे सर्वेऽपि द्रव्यमाश्रित्य तिष्ठन्ति** इति यदुक्तं, तदपि स्पष्टम्।

१ - निरूप्यनिरूपकभावः, २ -आधाराधेयभावः

तदर्थस्तु इदानीं इत्थं फलितः।




चि.स.१०

तानि नव द्रव्याणि सङ्ग्रहकारेण निर्दिष्टानि पृथिव्यादीनि। तथा च सङ्ग्रहः ***तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव*** इति।

ततः गुणान् विभजते -

***रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्व-द्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः चतुर्विंशतिर्गुणाः*** इति।

केचन दार्शनिकाः कर्म इति पदार्थं नाङ्गीकुर्वन्ति। अतः कर्मणि अस्ति विवादः। न तथा गुणेषु। गुणानाम् इयत्ताविषये विवादसत्त्वेऽपि गुणः अतिरिक्तपदार्थः वर्तते न वा इति नास्ति विवादः। अतः गुणकर्मणोः मध्ये गुणा एव द्रव्यनिर्देशोत्तरं निर्दिष्टाः।

ते च रूपरसगन्धस्पर्शेत्यादिसङ्ग्रहपङ्क्त्या निरूपिताः।

ततः कर्म *क्रिया* निर्दिष्टा उत्क्षेपणादिग्रन्थेन।

✳ ***उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि।***

पूर्वोक्तानां गुणानां कर्मणां च विस्तृतं विवरणं अग्रिमे लक्षणप्रकरणे भविष्यति। सम्प्रति नाम्ना सङ्कीर्तनम् एव भवति।

तत्र **सर्वे गुणादयः द्रव्ये वर्तन्ते** इत्यस्य पूर्वोक्तस्य (पृ.३) अयमर्थः विवक्षितः।

द्रव्यम्  गुणः  कर्म  सामान्यम्  विशेषः  समवायः  अभावः

द्रव्यम्

सप्तापि पदार्थाः द्रव्ये भवन्ति इत्यर्थः।

सामान्यम्  समवायः  अभावः

गुणः

तथा च गुणे द्रव्यं, गुणः कर्म, विशेषः च नास्ति इत्यर्थः।

सामान्यम्  समवायः  अभावः

कर्म

एवं कर्मणि अपि द्रव्यं, गुणः कर्म, विशेषः च नास्ति इत्यर्थः।

समवायः  अभावः

सामान्ये

तथा च सामान्ये द्रव्यं, गुणः कर्म, सामान्यं विशेषः च नास्ति इत्यर्थः।

समवायः  अभावः

विशेषः

विशेषे पूर्वोक्ताः पञ्च पदार्थाः न सन्तीत्यर्थः।

अभावः

समवाये

समवाये षट् पदार्थाः न सन्तीत्यर्थः।

अभावः

अभावः

अभावे षट् पदार्थाः न सन्तीत्यर्थः।

चि.स.११

तथा च गुणादयः **सर्वे द्रव्ये एव तिष्ठन्ति** इति न तद्वाक्यार्थः, किन्तु द्रव्ये अवश्यं तिष्ठन्ति, गुणादौ यथायथं तिष्ठन्ति इति अर्थः।

द्रव्ये वर्तन्ते इत्यत्र पूर्वदर्शितचित्रैः अर्थवर्णनेन च इदमायाति। सामान्यं द्रव्ये, गुणे, कर्मणि, त्रिषु वर्तते। तत्र सर्वेषु द्रव्येषु विद्यमानं गुणरूपं पदार्थमादाय द्रव्यसमुदायः यथा निरूपितः( पृ.२) तथा गुणत्वसामान्यमादाय गुणसमुदायः, कर्मत्वसामान्यमादाय कर्मसमुदायः निरूपयितुं शक्यते।

## ✳ सामान्यपदार्थनिरूपणम्

तस्य सामान्यस्य त्रीणि अधिकरणानि निरूप्य आधेयं सामान्यं निर्दिशति।

***परमपरं चेति द्विविधं सामान्यमिति।***

यद्यपि स्वयं ग्रन्थकारः उपरिष्टात् सामान्यलक्षणं वदिष्यति। तथापि सम्प्रदायरीत्या सामान्यसाधनाय यतितव्यम्। इत्थं च जातिसाधनमाहुः। बालं माता गवाक्षात् कञ्चन प्राणिनं प्रदर्श्य इयं गौः इति वदति। ततः तमेव बालमादाय पिता उद्यानं गच्छति। मार्गे पूर्वदृष्टसदृशाकारं प्राणिनं[१] दृष्ट्वा बालः **इयं गौः** इति वक्ति।

तत्र पूर्वं या गौः तेन दृष्टा सा अन्या, इयं चान्या। सा कृष्णा आसीत् इयं तु श्वेता। अतः उभयोः रूपमपि भिन्नम्। उभयोरपि शृङ्गपादादयः अवयवाः अपि परस्परं भिन्नाः। तर्हि किं दृष्ट्वा सः बालः **गौः इयम्** इति सम्यक् ज्ञातवान्? तदेव शास्त्रकारैः **सामान्यम्** इत्युच्यते। समानानां धर्मः सामान्यम्। एकविधावयवादिजन्यानि यानि गोशरीराणि तत्र सर्वत्र एकः अनुगतः धर्मः वर्तते। अनुगतः इत्यस्य सर्वत्र विद्यमानः इत्यर्थः। एवं च गवाक्षात् बालः, गोशरीरं गोत्वसामान्यं च उभयं पश्यति। मात्रा इयं गौः इत्युक्तौ गोशब्दस्य गोत्वशरीरयोः च सम्बन्धमपि जानाति।[२] ततः उद्यानमार्गे पुनः नूतनां[३] गां तत्र गोत्वं च पश्यति। **गोशब्दं** स्मृत्वा **गौः इयमिति** च वक्ति।

तथा च सामान्यपदार्थास्वीकारे अपूर्वगोव्यक्तेः ज्ञानं न स्यात्। अतः

१ - पिण्ड इति शास्त्रे व्यवह्रियते।

२ - अमुं च सम्बन्धं शक्तिरूपं शब्दखण्डे निरूपयिष्यामः।

३ - अपूर्वा इति शास्त्रे व्यवहारः।

सामान्यमवश्यं स्वीकार्यम्। तदेव शास्त्रे जातिः इति व्यवह्रियते। तल्लक्षणविचारः सङ्ग्रहानुसारेणैव भविष्यति।

## एकत्र अनेकजातीनां वृत्तित्वनिरूपणम्

तद्विभागं सम्प्रति आह - परमपरं चेति द्विविधं सामान्यमिति। दर्शितरीत्या सामान्यं सिद्धम्। तत्र इदमुक्तं भवति। पुस्तके पुस्तकत्वं सामान्यमस्ति। तथैव पुस्तकं वक्ष्यमाणरीत्या पृथिवी, अतः तत्र पृथिवीत्वं जातिर्वर्तते। पुस्तके पूर्वोक्तरीत्या गुणोऽस्तीति तद्द्रव्यमपि। अतः तत्र द्रव्यत्वं जातिरपि अस्ति।

इदानीं नीलवर्णम् उदाहरणं स्वीकुर्मः। तत्र नीलत्वजातिरस्ति। सः वर्णः, अतः तत्र वर्णत्वमपि वर्तते। परन्तु शब्देऽपि वर्णः इति व्यवहारः वर्तते। अतः वर्णः इत्युक्तौ संशयः भवति। अतः इतः वर्णे रूपम् इति व्यवहरामः। तथा च नीलरूपे रूपत्वमपि वर्तते। स च गुण इति कृत्वा तत्र गुणत्वजातिरपि वर्तते। कर्मस्थले उत्क्षेपणम् उदाह्रियते। उत्क्षेपणे उत्क्षेपणत्वं वर्तते। तच्च कर्म इति तत्र कर्मत्वमपि वर्तते। तथा चेत्थं चित्रं भवेत्।






चि.स.१२

इत्थं दर्शितरीत्या पुस्तके द्रव्ये तिस्रः, नीलादौ च तिस्रः जातयः सन्ति। कर्मणि द्वे जाती भवेताम्। सर्वा अपि इमाः जातयः एकविधदर्शनेन सिद्ध्यन्ति। इदं पुस्तकम् इदमपरं पुस्तकम् इदमपि अपरमिति अनेकानि पुस्तकानि दृष्ट्वा पुस्तकत्वं सिद्ध्यति। एवं गुणत्वादौ ज्ञातव्यम्। तत्रापि रूपं गुणः, रसः गुणः इत्येवमेकाकारप्रतीत्या सर्वेषु गुणत्वसिद्धिः। एवं कर्मणि।

## ✳ सत्ता अतिरिक्ता जातिः इति निरूपणम्

परन्तु एकाकारज्ञानं यथा गवादौ भवति तथा द्रव्यं सत्[१] , गुणः सन्, कर्म सत् इति द्रव्यगुणकर्मणामपि एकविधं ज्ञानं वर्तते। एवं च शाबलेयः गौः, बाहुलेयः गौः[२] इति एकविधज्ञानेन यथा सर्वेषु गोषु गोत्वं सिद्ध्यति तथा द्रव्यं सत्, गुणः सन्, कर्म सत् इति एकविधज्ञानेन द्रव्यगुणकर्मसु अतिरिक्तं सामान्यं, *जातिः* सिद्ध्यति। सतः भावः, *धर्मः*, सत्ता अतिरिक्ता जातिः।










चि.स.१३

## सत्तायाः परत्ववर्णनम्

तथा च पूर्वस्मिन् चित्रे द्रव्ये गुणे कर्मणि च एका जातिः वर्धनीया। सैव **परा जातिः**, *परं सामान्यम्*। परमित्यस्य यस्य अधिकरणानि सर्वेभ्यः सामान्येभ्यः अधिकानि सः अर्थः। द्रव्यत्वं सर्वेषु द्रव्येषु वर्तते परन्तु गुणे नास्ति, तत्र सत्ता वर्तते। गुणत्वं सर्वेषु गुणेषु वर्तते परन्तु द्रव्ये नास्ति, तत्रापि सत्ता वर्तते। एवं कर्मत्वस्यापि। तथा च जगति १०० द्रव्याणि, १००० गुणाः, ५०० कर्माणि चेत्

१०० ⟶ द्रव्यत्वम्
१००० ⟶ गुणत्वम्
५०० ⟶ कर्मत्वम्
१६०० ⟶ सत्ता




चि.स.१४

तथा च सत्तायाः अधिकरणानि सर्वसामान्येभ्यः अधिकानि इति सा परा।

१ - विद्यते, कालेन सम्बद्धम्।

२ - वृषभादिनिर्देशाय शास्त्रदीपिकादिप्राचीनग्रन्थेषु शाबलेयः बाहुलेयः इत्यादिपदानि दृश्यन्ते।

## द्रव्यत्त्वादीनां परापरत्वसाधनम्

एवमेव व्यस्तक्रमेण न्यूनाधिकरणचिन्तायां द्रव्यत्वस्य सत्तापेक्षया न्यूनाधिकरणानि, पृथिवीत्वापेक्षया अधिकानि। पृथिवीत्वं पृथिव्यामेव, द्रव्यत्वं तु जलादावपि अस्ति। अतः द्रव्यत्वं सत्तापेक्षया **अपरं**, *न्यूनेषु वर्तते*, पृथिवीत्वापेक्षया **परम्**, *अधिकेषु वर्तते* । एवं पृथिवीत्वं द्रव्यत्वापेक्षया न्यूनवर्ति । घटत्वापेक्षया अधिकवृत्ति । घटत्वं पटे नास्ति तत्र पटत्वं वर्तते, पटत्वं घटे नास्ति तत्र घटत्वं वर्तते । परन्तु घटे पटे च पृथिवीत्वं वर्तते अतः पृथिवीत्वं सत्ताद्रव्यत्वाभ्यां न्यूनवृत्ति, *अपरम्*, घटत्वपटत्वादिभ्यः अधिकवृत्ति *परम्* ।

घटत्वादिजात्यपेक्षया न्यूनवृत्तिःजातिर्नास्ति इति घटत्वम् अपरजातिः इति उच्यते। सर्वमेतत् बुद्धौ निधाय मूले उक्तं **परमपरं चेति द्विविधं सामान्यम्**। परं सत्ता अपरं पटत्वादि, पृथिवीत्वादि परापरम् इति तदर्थः। ततः

## *नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव*

 इति विशेषः निरूपितः। गुणकर्मणोः निरूपणावसरे पौर्वापर्यविचारे कर्म केचन आचार्याः नाङ्गीकुर्वन्ति इत्युक्तम्। विशेषविषये इत्थं वक्तव्यम्। अयं वैशेषिकैरेव अङ्गीक्रियते। नैयायिकैः च अनुमन्यते।[1] अन्येषु शास्त्रेषु तस्य खण्डनमेव अस्ति। एवंविधोऽयं विशेषपदार्थः इति सर्वजनसिद्धजातिपदार्थानन्तरं निरूपितः।

## ✳ उदाहरणेन विशेषपदार्थवर्णनम्

एतत्साधनाय साम्प्रदायिकाः एवमाहुः।

एकः पाषाणः द्विधा खण्डितः। तयोः शकलयोः **क** एवं **ख** इति संज्ञा कृता। ततः कशकलस्य द्वे शकले साधिते। तयोः क्रमेण **ग** एवं **घ** इति संज्ञे कृते। तयोरपि गशकलं गृहीत्वा तस्य द्वे शकले, तयोरपि शकलमेकमादाय द्वे शकले इति एवंविधशकलपरम्परा कुत्रचित् स्थगनीया। कोऽर्थः? एकं तादृशं शकलं स्वीकर्तव्यं यस्य पुनः शकलं न भवति। तच्चरमं शकलमेव **परमाणुः** इत्युच्यते।

---

१ - कणादः वैशेषिकशास्त्रप्रणेता आचार्यः। तत्प्रणीतं वैशेषिकशास्त्रं गोतमप्रणीतं न्यायशास्त्रं च सम्मील्य न्यायशास्त्रपाठनं प्रवर्तते।

तत्र कसंज्ञकः पाषाणखण्डः अन्येभ्यः पाषाणखण्डेभ्यः भिन्नः इति वयं ज्ञातुं प्रभवामः।[1] कुतः? तस्य यौ अवयवौ ग/घ ताभ्यां क एव उत्पन्नः। अन्यस्य पाषाणखण्डस्य अन्ये अवयवाः न तु गघौ।




चि.स.१५

एते परस्परं भिन्ना इति वयं ज्ञातुं शक्नुमः। कथम्? प्रत्येकमवयवभेदेन। तथा च यस्य यस्य अवयवाः वर्तन्ते, तस्य तस्य भेदज्ञानम् अवयवभेदेन भवति। परन्तु चरमशकलस्य परमाणोः, यस्य अवयवः न वर्तते तस्य, तादृशमेव यत् अन्यत् शकलं *परमाणुः*, तस्य च परस्परं भेदज्ञानं कथं भवेत्? अतः तादृशज्ञानसम्पादनाय कणादमहर्षिणा **विशेष** इति पदार्थः स्वीकृतः। एते च विशेषाः यावन्तः परमाणवः, तावत्सङ्ख्याकाः सन्ति इत्यपि स्वीक्रियते। यथा प्रत्येकम् आत्मनः एकैकं मनः इति मनोनिरूपणे वक्ष्यते (पृ. ७१) तथा अत्रापि प्रत्येकं परमाणोः विभिन्नः विशेषः। तथा च




चि.स.१६

च-परमाणुः छ-परमाणुतः भिन्नः। कुतः? त-विशेषस्य स एव आश्रयः न तु छ-परमाणुः। एवं विपरीतमपि ज्ञातव्यम्।

तथा च विशेषस्वीकारेण परमाणूनां परस्परभेदज्ञानं वयं सम्पादयितुं प्रभवामः।

१ - अयं च भेदः लोकसिद्धोऽपि निष्कृष्टतया अनुपदमेव अभावनिरूपणे वक्ष्यते।

यथा परमाणोः अवयवो नास्ति तथैव आकाशादिद्रव्याणामपि अवयवाः न सन्ति। अतः परस्परभेदज्ञानाय आकाशादावपि विशेषापेक्षा वर्तते । परमाणुः नित्यः[१] आकाशादयश्च नित्याः इति सर्वेषु नित्येषु द्रव्येषु विशेषः सिद्ध्यति इति एतत्सर्वमभिसन्धायोक्तं **नित्यद्रव्यवृत्तयो विशेषाः।** अनन्ताः परमाणवः, नित्यद्रव्याणि च। तावन्तः विशेषाः इति तेषामानन्त्यमपि सिद्ध्यति।

### ✳ समवायसाधनप्रकार:

द्रव्यादित्रिकं निरूप्य सामान्यविशेषौ निरूपितौ। ततः समवायं निरूपयति

***समवायस्त्वेक एव*** इति ।

इत्थं हि समवायसाधनमाहुः। कस्यचित् पुरुषस्य हस्तौ स्वस्थानस्थितौ स्तः। ततः पुरुषस्य नमस्कारेच्छा भवति। ततः हस्तयोः क्रियया तयोः संयोगः उत्पद्यते। एवं च पूर्वं विविक्तौ, *भिन्नस्थानस्थितौ* हस्तौ संयुक्तौ भवतः।

(१) परन्तु घटोत्पत्तिर्यत्र भवति तत्र [२]कपालद्वयसंयोगानन्तरम् एवं कदाचित् भवेत् वा यत् घटः अन्यत्र स्थितः, कपालः अन्यत्र, ततः कपालद्वयसंयोगानन्तरम् उभयोरपि सम्बन्धः?



(२) घटस्य तद्रूपस्यापि च एवमेव चिन्तनीयम्। किं घटं विहाय अन्यत्र आश्रयं विना स्थितं रूपं घटेन सह सम्बद्धम् इति सम्भाव्यते ? (३) बिलस्य मुखे सर्पः वर्तते । तस्य प्रसर्पणरूपा क्रिया तु किञ्चित् अग्रे चलिता इति सम्भाव्यते ? (४) एकस्मिन् ह्रदे घटः पतितः। घटः ह्रदतलं गतः। घटत्वं तु जलोपरि तरति इति दृष्टं वा केनचित्?

(१) सर्वेषां प्रश्नानां **न** इत्येव समाधानम्। अतः घटस्य कपालं विहाय

(२) रूपस्य घटं विहाय

(३) प्रसर्पणस्य सर्पं विहाय

(४) घटत्वस्य घटं विहाय

---

१ - यस्य नाशो न भवति तन्नित्यम्।

२ - कपालः घटस्य अवयवः। तस्य अन्येन कपालेन संयोगे सति घटः उत्पद्यते।

कदाचिदपि अदर्शनात् नूनं तेषां सम्बन्धः न संयोगः। कुतः? पूर्वमप्राप्तयोः *विविक्तयोः* या प्राप्तिः सा **संयोग** इत्युच्यते।

अतः संयोगं विहाय अन्यः कश्चित् सम्बन्धः एतेषां स्वीकार्यः।




चि.स.१७

सः सम्बन्धः एव **समवायः**। अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योः विशेषनित्यद्रव्ययोः च अयमेव **समवायसम्बन्धः**। तत्र आश्रयाणाम् आधेयानां च नानात्वेऽपि लाघवात् अयं समवाय एक एव इति स्वीक्रियते।

## लाघवगौरवस्वरूपम्

लाघवं नाम विचारसौकर्यम्। एवं चिन्तयामः। कश्चित् आपणं गन्तुं प्रवृत्तः। तस्य माता तं प्रति अवदत् **गुडं, तण्डुलान् चाहर**। सः ओम् इत्युक्त्वा निर्गतः। तदैव तस्य भार्या समागत्याह - **शर्करां, शाकं, सर्षपान्, विद्युद्दीपं, पुस्तिकां, पेटिकां,...**

**अलम्, अलम्, अलम्, न प्रभवामि इमानि सर्वाणि बुद्धौ स्थापयितुम्। अतः सर्वं विलिख्य देहि** इति सः भार्यां प्रति अब्रवीत्।

अत्र पश्यतु। पूर्वं मात्रा द्वयमेवोक्तं तदा अङ्गीकृत्य प्रवृत्तः तदाहरणाय। ततः भार्यया पञ्चषाः पदार्थाः उक्ताः तदा निवार्य भाषणात् विलिख्य देहीति वक्ति। को हेतुः? विचारे धारणे वा सौकर्यम्। द्वित्राणां बुद्धौ स्थापने क्लेशः न भवति। अनेकेषां स्थापने भवति। इदमेव विचारसौकर्यं लाघवमित्युच्यते। तद्विपरीतम् असौकर्यं गौरवमित्युच्यते ।

तथा च आश्रयाणाम् आधेयानां च अनेकत्वेन समवायस्यापि अनेकत्वस्वीकारे गौरवमिति लाघवाय *विचारसौकर्याय* एक एव समवायः इत्यङ्गीक्रियते।

## ✳ अभाववर्णनम्

एतावता उद्देशक्रमानुसारेण षट् भावाः निरूपिताः। भावो नाम यः अस्ति इति प्रतीयते। यथा द्रव्यमस्ति, गुणः अस्ति.... समवायः अस्ति। ते भावाः इति कथ्यन्ते। इदानीं यः, नास्तीति ज्ञायते तमभावं परिशीलयामः। किञ्चित् भूतलमस्ति। तत्र घटो यदि अस्ति, तदा एवं व्यवहरामः **अत्र भूतले घटः अस्तीति**। यदि घटः अपसारितः **तदा वदामः अत्र घटः नास्ति।** घटः अस्ति इति व्यवहाराय *भाषणाय* घटः ज्ञातव्यः भवति तथा घटो नास्तीति वक्तुं कः ज्ञातव्यो भवति? स एव **अभावः** इत्युच्यते।





चि.स.१८

अत्र व्यवहारेऽपि अस्ति विशेषः। पात्रेऽस्मिन् कियत् जलमस्ति इति पृष्टे अर्धमस्तीति कश्चित् वक्ति। कश्चित्तु अर्धं पात्रस्य रिक्तमस्तीति वक्ति। पात्रं तु तदेव। जलमपि तावदेव। तथापि कश्चित् अस्ति इति वदति । कश्चित् नास्तीति वदति। तद्वदेव सर्वैः अभावमधिकृत्य भूतले घटो नास्तीति उच्यते । न्यायशास्त्रे, नास्तीति अनुक्त्वा भूतले घटाभावः अस्तीति उच्यते ।

# विरोधनिरूपणम्

अयं घटाभावः घटस्य अभावः। अयं च घटे सति न ज्ञायते। घटे असति ज्ञायते। लोके हि एवंविधा स्थितिः विरोधः इति व्यवह्रियते। यथा नकुल अस्ति चेत् सर्पः न भवति। सर्पः अस्ति चेत् एवं विघ्नः, अत्रः नकुलः नास्तीति।

## वध्यघातकभावरूपः विरोधः

अयं विरोधः द्विविधः भवति। **वध्यघातकभावः, सहानवस्थानम्।** अहेः नकुलस्य च विरोधः वध्यघातकभावरूपः। तथा हि-कुत्रचित् सर्पः अस्ति।

| प्रथमक्षणः | द्वितीयक्षणः | तृतीयक्षणः | चतुर्थक्षणः |
|---|---|---|---|
| सर्पः एव अस्ति। | सर्पः एव अस्ति। | सर्पः अस्ति नकुलोऽप्यस्ति। | सर्पः नष्टः नकुलः अस्ति। |

चि.स.१९

तथा च वध्यघातकभावरूपे विरोधे ययोः विरोधः वर्ण्यते, तयोः उभयोरपि कस्मिंश्चित् क्षणे *काले* एकत्र स्थितिः भवति। यथा प्रकृतोदाहरणे सर्पस्य नकुलस्य च तृतीयक्षणे एकत्र स्थितिः। एवं एकेन अग्रिमक्षणे ततोऽपि अधिककालेन वा अपरस्य नाशः क्रियते। अयं विरोधः शास्त्रे **वध्यघातकभाव** इति प्रसिद्धः।

## सहानवस्थानरूपः विरोधः अभावस्थले

सहानवस्थानं नाम सः विरोधः यत्र उभयोः विरोधिनोः कस्मिन् अपि काले सह अवस्थानं *स्थितिः* न भवति।

| प्रथमक्षणः | द्वितीयक्षणः | तृतीयक्षणः | चतुर्थक्षणः |
|---|---|---|---|
| घटाभावः | घटाभावः | घटः | घटः |

चि.स.२०




चि.स.२१

यथा प्रकृते विविधेषु क्षणेषु घटो वा भवेत् घटाभावो वा भवेत् न कदाचिदुभौ। अयमेव **सहानवस्थानरूपः** विरोधः इत्युच्यते।

## ✳ प्रतियोग्यनुयोगिभावनिरूपणम्




चि.स.२२

अत्र निरूपणसौकर्याय घटे विद्यमानस्य विरोधस्य **प्रतियोगिता** इति संज्ञा कृता। अभावे विद्यमानस्य विरोधस्य **अनुयोगिता** इति संज्ञा।

इयं प्रतियोगिता अनुयोगिता च साकाङ्क्षा भवति। विरोधः, प्रतियोगिता इत्युक्तौ कस्य इति नियमेन खलु प्रश्नः भवति। एवं अनुयोगितायाः अपि ससम्बन्धिकत्त्वम्। अतः आधेयताधिकरणतयोः यथा निरूप्यनिरूपकभावः उच्यते तथा अत्रापि वक्तव्यः।






चि.स.२३

घटनिष्ठ-प्रतियोगिता-निरूपित-अनुयोगिताश्रयः अभावः। अभावनिष्ठ-अनुयोगिता-निरूपित-प्रतियोगिताश्रयः घटः इति वक्तव्यम्। अयमेव सङ्ग्रहे वक्ष्यमाणेषु अभावेषु अत्यन्ताभावः इति निर्दिष्टः।

## सामान्याभाववर्णनम्

इदानीं तस्य सामान्याभावः इति प्रकारः निरूप्यते। **प्रतियोगिता** भावपदार्थे घटादौ विद्यमानः विरोधः इति निरूपितम्। सा प्रतियोगिता यदा एकजातियुक्तेषु *सजातीयेषु* यावत्सु भवति तदा सः सामान्याभावः इत्युच्यते। सामान्यस्य अभावः इति यथाश्रुते तु अयं जातेरभावः स्यात्। कुतः? सामान्यं, नाम प्रागुक्तरीत्या जातिः। तस्याः अभावः इति यदि अर्थः स्यात् तदा घटसामान्याभावः इत्यस्य घटस्य यत् सामान्यं, घटत्वं तस्य अभावः इत्यर्थः स्यात्। नायं विवक्षितः। किन्तु सर्वस्य घटस्य अभावः। घटसामान्यं यत् घटत्वं, तद्वान् सर्वोऽपि घटः। तस्याभावोऽयम्। कोऽर्थः? सर्वोऽपि घटः अस्य विरोधी। येन केनापि घटेन घटसामान्याभावस्य अपसारणं कर्तुं शक्यम्। अत्रेदं समीचीनमुदाहरणं पश्यामः।

कुतश्चित् कारणात् मत्स्यस्य जलस्य च वियोगः जातः। सः मत्स्यः त्रस्यति लुठति च। कुतः? सः जलमपेक्षते। अर्थात् सः जलाभावं पश्यति, अनुभवति। कीदृशजलाभावम्? जलसामान्याभावम्। कुतः? किमपि जलं मत्स्येनानुभूयमानं जलाभावं वारयितुं प्रभवति। कश्चित् तस्मै नदीजलं दद्यात्। कश्चित् तडागजलं दद्यात्। कश्चित् कूपजलमपि दद्यात्। यत्किञ्चिज्जलं तदभावस्य विरोधि। विरोधरूपा प्रतियोगिता नदीजले, तडागजले, कूपजले अन्यस्मिन् सर्वस्मिन्नपि जले वर्तते। अतः अयं जलसामान्याभावः। वक्ष्यमाणाभावयोः एवंविधप्रतियोगिता न भवति इति विशेषः।

### ✳ विशेषाभावः

तत्र द्वितीयाभावः विशेषाभावः। तत्र चातकपक्षिणं सम्प्रदाये उदाहरन्ति। स तु पक्षी वृष्टिकाले वृक्षस्य उच्चतमशाखायामुपविश्य शिरः उन्नमय्य मेघं पश्यन् वृष्टिमभिवाञ्छति। कुतः? सोऽपि जलाभावं पश्यति। किं तेन दृश्यमानः अभावः नदीजलेन कूपजलेन वा वारयितुं शक्यः? नैव। कश्चित् कूपजलमादाय तस्मै यच्छति चेत् न सः तुष्यति। अतः अयं जलविशेषाभावः। जलविशेषस्य अभावः। अस्य

प्रतियोगिता सर्वस्मिन् जले न वर्तते किन्तु जलविशेषे। किं तत् ? वृष्टिजलम्। अतः तदेव तमभावं नाशयितुं प्रभवति। तस्मात् वृष्टिजलं नास्ति इति अयं जलविशेषाभावः।




चि.स.२४

## विशेषविशेषाभाववर्णनम्

इतोऽपि अन्यं विशेषविशेषाभावं सम्प्रदाये निरूपयन्ति। स च स्वातीनक्षत्रीय-वृष्टिजलाभावः। तथा हि - सूर्यः प्रायः चतुर्दश वा पञ्चदश वा दिनानि एकैकस्मिन् नक्षत्रे तिष्ठति। तत्र मृगनक्षत्रमारभ्य हस्तनक्षत्रपर्यन्तं नवसु नक्षत्रेषु सूर्ये सति सार्धमासचतुष्टयं प्रचुरा वृष्टिः भवति। ततः चित्रास्वातीनक्षत्रयोः किञ्चिदूना वृष्टिः भवति। अयं नक्षत्रकालः प्रायः कार्तिकमासि भवति। यदा स्वातीनक्षत्रीया वृष्टिः आसन्ना भवति, तदा सागरे गभीरे जले स्थिता शुक्तिका जलोपरि समेत्य स्वातीनक्षत्रस्य वृष्टिजलं कामयते।

अर्थात् स्वातीनक्षत्रीयवृष्टिजलाभावं पश्यति। नायमभावः कूपजलेन, नदीजलेन वा शक्यः निवारयितुम्। नापि येन केनचित् वृष्टिजलेन। चित्रानक्षत्रीयवृष्टिजलसत्वेऽपि न हि शुक्तिः तत् गृह्णाति। केवलं स्वातीनक्षत्रीयवृष्टिजलं वाञ्छति। अतः अस्य अभावस्य प्रतियोगि न जलसामान्यम्। नापि वृष्टिजलसामान्यम्[१]। अपि तु स्वातीनक्षत्रीयवृष्टिजलमेव। जलविशेषरूपवृष्टिजलस्यापि अयं विशेषः यत् स्वातीनक्षत्रीयवृष्टिजलं तस्य अयम् अभावः अतः विशेषविशेषाभावः इति उच्यते। एवमेव सर्वत्र पुष्पसामान्याभावः, नीलपुष्पाभावः, शरद्कालिकनीलपुष्पाभावः इत्यादयः सामान्याभावाः, विशेषाभावाः, विशेषविशेषाभावाः उदाहर्तव्याः।

१ - सर्वं वृष्टिजलमित्यर्थः।

## ✳ अवच्छेदकत्वपदार्थवर्णनम्

त्रयाणामेषां जलमेव प्रतियोगि। तथापि जलनिष्ठप्रतियोगितानां परस्परं भेदः आनुभविकः। अन्यः खलु सर्वेषु जलेषु विद्यमानः सामान्याभावस्य विरोधः। ततः अन्य एव वृष्टिजले विद्यमानः विरोधः। तस्य च सम्यक् ज्ञानार्थं अत्रैव च अवच्छेद्यावच्छेदकभावमपि पश्यामः।

कश्चित् क्षीरविक्रेता क्षीरमादायागतः। तस्मात् द्रोणपञ्चकपरिमितं क्षीरं क्रेतव्यमस्ति। कीदृशं पात्रं वयं नयामः ? न द्रोणदशकमानकम्। कुतः ? अतिवर्तेत। नापि द्रोणद्वयमानकम्। कुतः ? न्यूनीभवेत्। किन्तु द्रोणपञ्चकपरिमितं क्षीरं तापयितुं यत्पात्रं पर्याप्तं भवेत् तदेव स्वीकुर्मः। ततः किं कुर्मः ? विक्रेतुः समीपं गत्वा तस्य पुरतः पात्रं स्थापयामः। विक्रेता च पात्रे तस्मिन् क्षीरं स्रावयति।

इदानीं किं तेन योग्येन पात्रेण कृतम् ? द्रोणपञ्चकपरिमितं क्षीरं बृहत्पात्रगतक्षीरात् पृथक् कृतम्। पात्रस्थं क्षीरं दृष्ट्वा एवमवगच्छामः, **इदं क्षीरम् अन्यस्मात् क्षीरात् भिन्नम्**। केन एवमस्माभिः अवगतम् ? पात्रेण। तद्धि पृथक्करोति। **इदं क्षीरम् अन्यत्** इति बोधयति इति पात्रं क्षीरस्य **अवच्छेदकम्**। क्षीरं च **अवच्छेद्यं** भवति। क्षीरे अवच्छेद्यता, पात्रे च अवच्छेदकता। तयोः निरूप्यनिरूपकभावः।




चि.स.२५

इदानीं शास्त्रे एतादृशावच्छेद्यावच्छेदकभावस्य किं प्रयोजनमिति पश्यामः। अभावानां सामान्याभावः, विशेषाभावः, विशेषविशेषाभावः इत्येवं विभागः अनुपदम् एवास्माभिश्चिन्तितः। जलसामान्याभावस्य प्रतियोगिता सर्वस्मिन् जले, वृष्टिजलाभावस्य वृष्टिजले, स्वातीनक्षत्रीयवृष्टिजलाभावस्य च प्रतियोगिता स्वातीनक्षत्रीयवृष्टिजले इति तत्र स्थितम्। तासां प्रतियोगितानां अस्ति भेदः। जलाभावनिष्ठानुयोगितानिरूपित-प्रतियोगिता जलनिष्ठा अन्या, वृष्टिजलाभावनिष्ठानुयोगितानिरूपितप्रतियोगिता वृष्टिजलनिष्ठा ततो भिन्ना। एवं तृतीयेऽपि। परन्तु सः भेदः कथं ज्ञायते ?

यद्यपि स्वातीनक्षत्रीयवृष्टिजलाभावस्य प्रतियोगिता स्वातीनक्षत्रीयवृष्टिजले एव नान्यस्मिन् जले। वृष्टिजलाभावस्य प्रतियोगिता वृष्टिजले एव न तु अन्यस्मिन् जले इति प्रतियोगितयोः आश्रयौ उभयत्र भिन्नौ। अतः आश्रयभेदात् प्रतियोगिताभेदः ज्ञातुं शक्यः। तथापि जलं नास्तीति सामान्याभावस्य प्रतियोगिता यथा कूपजले वर्तते तथा वृष्टिजलेऽपि वर्तते, स्वातीनक्षत्रीयवृष्टिजलेऽपि वर्तते इति प्रतियोगितायाः आश्रयाः सर्वाणि जलानि भवन्ति। अतः आश्रयभेदेन प्रतियोगिताभेदं न साधयितुं प्रभवामः। विचारमेनं चित्ररूपेण पश्यामः।






चि.स.२६

अतः प्रतियोगितायाः आश्रयः भिद्यते इति प्रतियोगिताऽपि तत्र तत्र विलक्षणा इति ज्ञायते।




चि.स.१.२७

इह अस्याः प्रतियोगितायाः आश्रयः न भिद्यते, किन्तु सर्वाणि जलानि इति आश्रयभेदात् इयं प्रतियोगिता, अन्ययोः प्रतियोगितयोः भिन्ना *अन्या* इति न ज्ञायते। अतः तासां भेदसाधनाय **अवच्छेदकस्यापेक्षा** वर्तते।

✳ अत्र इदं ज्ञेयम्। प्रतियोगिनि यत् विशेषणं, प्रतियोगिनः उल्लेखः येन रूपेण, धर्मेण क्रियते तत् प्रतियोगितायाः **अवच्छेदकम्**। यथा जलं नास्तीति अभावः उक्तः। जले च प्रतियोगिनि सन्ति जलत्वद्रव्यत्वसत्तादयो धर्माः। परन्तु अभावकथनाय **जलं नास्ति** इत्येव उक्तमिति जलत्वेनैव जलस्य उल्लेखः कृतः। अतः तत् प्रतियोगितावच्छेदकम्।




चि.स.१.२८

तथा च यस्याः प्रतियोगितायाः भेदज्ञानमपेक्षितं, तस्याः यत् अधिकरणं जलं तत्र स्थित्वा इदं जलत्वम् इयं प्रतियोगिता अन्यप्रतियोगिताभ्यः अन्या *भिन्ना* इति बोधयति।

एवं वृष्टिजलं नास्तीति अभावस्यापि ।




चि.स.१.२९

एवं स्वातीनक्षत्रीयवृष्टिजलं नास्तीत्यभावस्थलेऽपि ।




चि.स.१.३०



अत्र यद्यपि जलसामान्याभावस्य प्रतियोगिता कूपजले इव स्वातीनक्षत्रीय-वृष्टिजलेऽपि वर्तते, अतः आश्रयाः ते एव, तथापि सामान्याभावस्य प्रतियोगितायाः अवच्छेदकं शुद्धं जलत्वम् । वृष्टिजलाभावस्य प्रतियोगितायाः अवच्छेदकं वृष्टिजलत्वं, स्वातीनक्षत्रीयवृष्टिजलाभावस्य प्रतियोगितायाः अवच्छेदकं स्वातीनक्षत्रीयवृष्टिजलत्वमिति अवच्छेदकभेदात् सिद्धः प्रतियोगिताभेदः । अत्रैवम् अवच्छेद्यावच्छेदकभावः ।




चि.स.३१

सर्वत्र चित्रेषु ऊर्ध्वगामिनि शरे निष्ठ इति, अधोगामिनि शरे आश्रय इति तिरश्चीने निरूपित इति न्यायभाषया व्यवहर्तव्यम्।

एवं च जलत्वनिष्ठ-अवच्छेदकतानिरूपित-अवच्छेद्यताश्रयजलनिष्ठ-प्रतियोगितानिरूपित-अनुयोगिताश्रयः अभावः इति विवरणं भवति।

इदम् अभावात् प्रभृति अपि वक्तुं शक्नुमः। अभावनिष्ठ-अनुयोगितानिरूपित-जलनिष्ठप्रतियोगितानिष्ठ-अवच्छेद्यतानिरूपितअवच्छेदकताश्रयः जलत्वम्।




चि.स.३२

द्वितीये वृष्टिजलत्वनिष्ठ-अवच्छेदकतानिरूपित-अवच्छेद्यता-आश्रय-वृष्टिजलनिष्ठ-प्रतियोगितानिरूपित-अनुयोगिताश्रयः अभावः इति।

एवम् अभावनिष्ठेत्यादि चिन्तनीयम्।

एवं स्वातीनक्षत्रीयवृष्टिजलाभावस्थले अपि वक्तव्यम्।




चि.स.३३

अत्र च अभ्यासाय पटसामान्याभावः नीलपटाभावः च ग्राह्यः। तत्र अवच्छेद्यावच्छेदकभावः निरूप्यनिरूपकभावः प्रतियोग्यनुयोगिभावः च आलोचनीयः।

### * निरूप्यनिरूपकभावः अवच्छेद्यावच्छेदकभावः च सर्वत्र भवति।

अत्रायं विशेषः। सम्बन्धः यः कोऽपि अस्तु, निरूप्यनिरूपकभावः तत्रावश्यं भवति अवच्छेद्यावच्छेदकभावः च। आधाराधेयभावे इदं चिन्तयामः। पूर्वोक्ते (पृ.६) उदाहरणे यज्ञदत्तनिष्ठ-आधेयता-निरूपित-अधिकरणताश्रयः आसनमित्यत्र आधारता-आधेयतयोः निरूप्यनिरूपकभावः यथा वर्तते तथा आधेयतायाः एवम् अधिकरणतायाः समानाधिकरणधर्मस्य च अवच्छेद्यावच्छेदकभावोऽपि भवति।




चि.स.३४

तथा च निरूप्यनिरूपकभावम् अवच्छेद्यावच्छेदकभावं च अन्तर्भाव्य यज्ञदत्तः आसनेऽस्तीत्यत्र इत्थं परिष्कारः भवति।

यज्ञदत्तत्व-निष्ठ-अवच्छेदकता-निरूपित-अवच्छेद्यताश्रय-यज्ञदत्तनिष्ठ-आधेयतानिरूपित[1]-आसनत्वनिष्ठ-अवच्छेदकता-निरूपित-अवच्छेद्यताश्रय-अधिकरणताश्रयः आसनम्।

एवमेव वक्ष्यमाणपृथिवीलक्षणेऽपि गन्धवती पृथिवी इत्यत्र पृथिवी भवति अधिकरणं गन्धश्च आधेयः। तथा च गन्धत्वनिष्ठ-अवच्छेदकता-निरूपित-

१ - निरूपितत्वमधिकरणतायाम्।

अवच्छेद्यताश्रय-गन्धनिष्ठाधेयता-निरूपित[१]-पृथिवीत्वनिष्ठ-अवच्छेदकतानिरूपित-अवच्छेद्यताश्रय-अधिकरणताश्रयः पृथिवी इत्येवं परिष्कारः आलोचनीयः।

### ✳ अभावस्य चतुर्विधत्वम्

प्रकृतमनुसरामः। दर्शितरीत्या अभावप्रक्रियापरिज्ञानाय सामान्याभावाद्यभावाः निरूपिताः। ते चात्यन्ताभावस्य प्रभेदाः। तर्कसङ्ग्रहकृता तु

***अभावश्चतुर्विधः प्रागभावः, प्रध्वंसाभावोऽत्यन्ताभावोन्योन्याभावश्चेति***

इति दर्शितः अभावस्य विभागः।




चि.स.३५

अत्र एवं विभागचित्रं स्यात्।

इदानीं ग्रन्थोक्ताभावविभागानुसारेण प्रागभावः निरूप्यते। अस्ति कश्चित् घटनिर्माता[२]। सः घटनिर्माणाय मृदमाहरति जलं चानयति। तेन संयुक्तां मृदं भ्रमयितुं चक्रमानयति, सिद्धं घटं चक्रात् पृथक्कर्तुं रज्जुं च आहरति। तदा तादृशीं घटसामग्रीं दृष्ट्वा भवति ज्ञानम् **अत्र घटो भविष्यति**। एतादृशज्ञानं[३] घटाभावं प्रकाशयति।

अयमेव घटप्रागभावः। घटोत्पत्तेः प्राक्, सामग्रीसत्वे घटाधिकरणे प्रतीयमानः, *ज्ञायमानः*। अत्रापि घटस्य, अस्य अभावस्य च विरोधः, *प्रतियोग्यनुयोगिभावः* अस्ति। यदा प्रागभावः, न तदा घटः। उत्पन्ने पुनर्घटे न घटप्रागभावः इति अस्ति तयोः सहानवस्थानरूपः विरोधः। तन्निरूपणप्रकारः पूर्ववज्ज्ञातव्यः।

१ - निरूपितत्वमधिकरणतायाम्। २ - कुलालः। ३ - प्रत्ययः।




चि.स.३६




चि.स.३७

एवं घटे मुद्गरपाते सति अत्र **घटो ध्वस्तः** इति प्रतीतिः जायते। एतादृशप्रतीतौ यः प्रकाश्यते सः घटध्वंसः द्वितीयः अभावः।



अत्यन्ताभावस्तु प्राक् निरूपितः, भूतले घटो नास्ति इति अभावः। घटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती या प्रतियोगिता तन्निरूपकः अभावः। एवं पटोनास्तीति पटत्वावच्छिन्नप्रतियोगिताकः।

अन्योन्याभावनिरूपणाय तादात्म्यसम्बन्धादिनिरूपणमादौ क्रियते।

द्रव्ययोः संयोगः समवायनिरूपणे उक्तः। (पृ.१४) अभावः, प्रतियोगिता, अनुयोगिता इत्यादयः पदार्थास्तु न संयोगेन सम्बद्धाः भवन्ति। द्रव्ययोरेव संयोगः इति नियमात्। नापि समवायेन। समवायस्तु गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योः अवयवावयविनोः विशेषनित्यद्रव्ययोरेव इत्युक्तमेव। अतः अभावादिपदार्थानाम् आधाराधेयभावनिर्वाहाय स्वरूपसम्बन्धः[१] इति सम्बन्धः कल्प्यते।

अभावः भूतले स्वरूपसम्बन्धेन भवति। प्रतियोगिता घटे स्वरूपसम्बन्धेन भवति। पूर्वोक्ता अवच्छेदकतापि घटत्वे स्वरूपसम्बन्धेन *दैशिकविशेषणतया* भवति।

१ - दैशिकविशेषणता इति वा संज्ञा।




चि.स.३८

एवं घटादिपदार्थानां स्वस्मिन् एव यः सम्बन्धः सः तादात्म्यसम्बन्ध इत्युच्यते।

## ✳ इदम् अस्य कारणमिति वक्तुं निकषाः

तथा हि-कार्यकारणभावविचारे, *उत्पत्स्यमानं यत् कार्यं तत् प्रति किं कारणं भवितुमर्हति* इति विचारे आदौ तेन कार्याधिकरणे भाव्यम् इति चिन्तितम्। यदि हस्तमलनिवारणं जलेन कर्तुमिच्छति चेत् यद्धस्ते मलः अस्ति *यत्र मलनिवारणरूपं कार्यं कर्तव्यं* तद्धस्ते एव जलसंयोगः आवश्यकः न तु अन्यस्मिन् हस्ते, भूतलादौ वा। अतः कार्यमिति यत् वयं मन्यामहे तस्य अधिकरणे कारणमिति यत् निर्धारणीयं तेन स्थातव्यम्।

इतश्च चिन्त्यम्। घटनिर्माणस्थले तन्निर्माणरीतिं ज्ञातुं कश्चित् नागरिकः गच्छति। सोऽपि घटोत्पत्तिः यत्र भवति तत्र भूतले वर्तते एव। न तु सः घटस्य कारणमिति व्यवह्रियते। अतः कार्याधिकरणे विद्यते इति एतत् न पर्याप्तम्। किन्तु यत् कारणमिति निर्धारणीयं,[1]तेन कार्याधिकरणे सर्वदा भाव्यम्। नागरिकस्तु यदा ज्ञातुमिच्छति तदैव घटाधिकरणे भवति, नान्यदा। दण्डादयस्तु सर्वदा एव भवन्ति इति तानि घटकारणानि।

इतोऽपि चिन्त्यम्। घटः *कार्यं* स्वस्य अधिकरणे कपाले वर्तते, एवं सर्वदा वर्तते। अतः घटोऽपि घटस्य कारणं[2] स्यात्। अतः यस्मिन् क्षणे कार्योत्पत्तिः, तत्पूर्वक्षणे



१ - कारणत्वेन अभिमतम्।    २ - घटः स्वं प्रति।

कारणेन भाव्यमिति चिन्त्यते। घटः यद्यपि वर्तते, स्वोत्पत्त्युत्तरं सर्वदा वर्तते परन्तु न स्वोत्पत्तेः पूर्वं वर्तते।[1] अतः न घटस्य स्वं प्रति कारणत्वापत्तिः।

ये तु घटकारणीभूताः दण्डचक्रादयः ते घटाधिकरणे कपाले वर्तन्ते, सर्वदा वर्तन्ते, एवं घटोत्पत्तेः पूर्वक्षणे वर्तन्ते इति दण्डः घटकारणं, चक्रं घटकारणमिति व्यवहारः। तथा च किञ्चन कस्यचित् कारणमिति निर्धारयितुं

(१) तेन कार्याधिकरणे स्थातव्यम्।

(२) तेन कार्याधिकरणे सर्वदा स्थातव्यम्।

(३) तेन कार्याधिकरणे कार्योत्पत्तेः पूर्वक्षणे स्थातव्यम्।

इति भवति क्रमः विचारस्य।

## तादात्म्यास्वीकारे कपालस्य घटकारणत्वासम्भवः

इत्थं च कपालः घटं प्रति कारणं न स्यात्।






चि.स.३९

घटाधिकरणे कपाले कपालः स्वयं न प्रसिद्धैः संयोगादिभिः वर्तते। कुतः? संयोगः भिन्नयोरेव द्रव्ययोर्भवति। समवायोऽपि गुणगुणिभावादिस्थले एव कल्पितः। प्रतियोगितादिरूपतापि कपालस्य नास्ति। तेन दैशिकविशेषणतापि न सम्बन्धः। किञ्च सम्बन्धिनोः भेदे सति एव संयोगसमवायादयः सम्भवन्तीति कथम् एकस्यैव कपालस्य अभिन्नस्य स्वस्मिन् समवायादयः स्युः?

[1] - तदा तु तस्य प्रागभावः वर्तते।

अतः कपालस्य स्वस्मिन् सम्बन्धः **तादात्म्यम्** इति उच्यते। कपालः स्वस्मिन् तादात्म्येन स्थित्वा समवायेन स्वस्मिन् घटमुत्पादयतीति भवति कपालः घटस्य कारणम्। अतः सर्वस्यापि पदार्थस्य स्वस्मिन् यः सम्बन्धः सः तादात्म्यसम्बन्धः इति सिद्धम्।

सर्वोऽपि पदार्थः उक्तसम्बन्धेन स्वस्मिन् भवति। तेन सम्बन्धेन घटो नास्तीत्यभावः घटं विहाय जगति सर्वत्र भवति। अयमेव च भेदः। प्रतियोगिनं विहाय सः सर्वत्र भवति। एवं पटो न इति भेदः पटं प्रतियोगिनं विहाय सर्वत्र भवति। अयमेव च भेदः *अन्योन्याभावः* इति अभावविभागे चतुर्थः निर्दिष्टः। तल्लक्षणं च सङ्ग्रहपङ्क्तिव्याख्याने निरूपयिष्यते।

## ✳ अधिकरणस्यापि भवति अनुयोगि इति संज्ञा

अभावाः एतावता निरूपिताः। तन्निष्ठः विरोधः *अनुयोगिता* अपि उक्ता। अस्य च अनुयोगिताशब्दस्य अन्यत्रापि प्रयोगः दृश्यते। न्यायग्रन्थेषु अधिकरणस्यापि क्वचित् अनुयोगि इति व्यवहारः दृश्यते। यथा भूतलं घटानुयोगि। अत्र भूतलम् अनुयोगि चेत् अनुयोगिता भूतले भवति। इयं चानुयोगिता न अभावनिष्ठविरोधरूपा। किन्तु अधिकरणनिष्ठः धर्म इति अधिकरणता एव। तथा च भूतले घटानुयोगितास्तीत्युक्तौ घटाधिकरणता अस्तीति अर्थः ग्राह्यः। 

एतां च अधिकरणतारूपाम् अनुयोगितामादाय भेदात्यन्ताभावयोः वैलक्षण्यं सम्प्रदाये इत्थं वर्णयन्ति।

अत्यन्ताभावस्थले बोधनाय प्रतियोगिवाचकपदस्य प्रथमा, अनुयोगिवाचकपदस्य च सप्तमी भवति। यथा भूतले घटो नास्तीति अत्यन्ताभावबोधकः प्रयोगः। अत्र च घटाभावः भूतले अस्ति। अभावप्रतियोगिता घटे। तद्वाचकपदोत्तरं प्रथमाविभक्तिः भवति। अभावानुयोगि भूतलम्। अतः तद्वाचकपदोत्तरं सप्तमी विभक्तिः भवति। एवमेव वायौ रूपं नास्ति, रूपे विशेषः नास्तीति वाक्येषु प्रतियोगिवाचकपदस्य प्रथमा, अनुयोगिवाचकपदस्य सप्तमी विभक्तिः समर्थनीया।

भेदस्थले तु प्रतियोग्यनुयोगिवाचकपदाभ्यां प्रथमा विभक्तिः भवति। यथा घटः पटो न इति। यदि घटभेदः पटेऽस्तीति वक्तुमिच्छति, तदा पटः अनुयोगी। घटः प्रतियोगी। इयमपि पटनिष्ठानुयोगिता अधिकरणता एव। एवमिह विपरीतमपि सम्भवति। पटभेदः घटनिष्ठः बोधयितुमिष्टश्चेत् अपि इदं वाक्यं भवति। तर्हि अनुयोगिता घटनिष्ठा। अनुयोगिताप्रतियोगितयोः आश्रयभेदेऽपि विभक्तौ भेदः नैव भवतीति भेदस्थले विशेषः।

## ✳ ज्ञानं, तद्विषयता च

विवरणसौकर्याय विषयता, विषयिता चेति द्वौ सम्बन्धौ निरूप्येते। तत्र गुणविभागे बुद्धिः ज्ञानमिति वा गुणः सङ्ग्रहे वक्ष्यते। अयं च सर्वव्यवहाराणां कारणमिति चोच्यते। कथम ? येन कदाचिदपि गौः केनापि प्रमाणेन[१] न ज्ञाता, न सः **गामानय** इत्यादिव्यवहारसमर्थः *वक्तुं समर्थः*। एवं सर्वत्र।

अतः अस्ति ज्ञानापेक्षा। किञ्च यः कश्चित् घटं जानाति, न सः तदा पटं मठं

वा जानाति। एवं यदा पटं जानाति न तदा घटं मठं वा। एवम् अन्यत्रापि। अन्यथा एकेन ज्ञानेन सर्वेऽपि पदार्थाः ज्ञाताः इति सः सर्वज्ञ एव स्यात्।

एवं च यदा यस्य पदार्थस्य ज्ञानं तदा स एव पदार्थः ज्ञातः नान्यः इति व्यवस्थासिद्धये ज्ञानस्य एवं घटपटादीनां कश्चित् सम्बन्धः कल्प्यः। स एव च **विषयतासम्बन्धः**। **घटज्ञानकाले** यद्यपि घटो वर्तते पटोऽपि वर्तते परन्तु ज्ञानस्य **विषयतासम्बन्धः** घटेन सहैव वर्तते न पटेन सह इति। वदन्ति च जनाः चन्द्रमसं पश्यामि अहं न अरुन्धतीम्।

तथा च ज्ञानस्य पदार्थेन यः सम्बन्धः सः विषयता। ज्ञानस्य घटः विषयः। अतः घटे विषयता। अयमेव च सम्बन्धः। वैपरीत्येन विचारे विषयः अस्य अस्तीति **विषयि ज्ञानम्**, ज्ञाने विषयिता, तर्हि घटस्य ज्ञानेन यः सम्बन्धः सः **विषयितासम्बन्धः**।

---

१ - ज्ञानस्य उपायः।

* इत्थं हि सम्प्रदाये ज्ञानपदार्थं बोधयन्ति। ज्ञानं दीपस्थानापन्नम्। विषयः प्रकाश्यः। ज्ञानस्य दीपरूपस्य या प्रभा सा विषयतासम्बन्धः। सा प्रभा यस्मिन् पतति स प्रकाश्यः *ज्ञानस्य विषयः* इत्युच्यते। यस्मिन् सा प्रभा नास्ति सः न प्रकाश्यते। अतः विषयः इति नोच्यते।




चि.स.४०

इयं च विषयतारूपा प्रभा घटे विद्यमाना, न ज्ञानेन विना भवति। कस्यायं प्रकाशः इत्युक्तौ ज्ञानस्य इत्युच्यते। अतः ज्ञानं प्रकाशस्य प्रेषकं **निरूपकमिति** उच्यते। तथा च **घटनिष्ठविषयतानिरूपकं ज्ञानमिति** सिद्धम्।

प्रकाशः अपि एषः त्रिविधः। घटभूतलयोः संयोगं यत् ज्ञानं प्रकाशयति तत् निदर्शनं स्वीकुर्मः। तस्य शास्त्रेषु **भूतलं घटवत्** इति आकारः भवतीति उच्यते। आकारः इत्यस्य **ज्ञानादिसविषयकपदार्थानां** ये विषयाः, तेषां प्रकाशितानां शब्देन प्रतिपादितं स्वरूपम् इत्यर्थः।




चि.स.४१

अत्र घटे एका प्रभा वर्तते। संयोगः घटभूतलयोः सम्बन्धः, तत्र एका प्रभा वर्तते। एवं भूतले एका प्रभा वर्तते। भूतले संयोगेन विद्यमानः घटः भूतलस्य **विशेषणम्**। भूतलं विशेष्यम्। तत्र सर्वासां प्रभाणां **विषयता** इति एकैव यदि संज्ञा स्यात् तर्हि किं विशेषणं किं विशेष्यम् इति न ज्ञायेत। अतः तत्र तत्र विद्यमानायाः विषयतायाः संज्ञान्तरं कर्तव्यम्। विशेषणे विद्यमाना प्रभारूपविषयता **प्रकारता** इति कथ्यते। संयोगे विद्यमाना प्रभा **संसर्गता इति,** एवं विशेष्ये विद्यमाना प्रभा **विशेष्यता** इति कथ्यते।

यथा अस्माकं विशेषसंज्ञाः गणेशादयः, कुलसंज्ञाः सामान्यरूपाः शुक्लादयः भवन्ति इति गणेशसंज्ञकः शुक्लः, गणेशाख्यः शुक्लः, इति व्यवहारः, तथा ज्ञानस्य पदार्थानां च यः सम्बन्धः तस्य सामान्यसंज्ञा विषयता इति, विशेषसंज्ञाः प्रकारता, संसर्गता, विशेष्यता इत्येवंरूपाः भवन्ति। तथा च घटे **प्रकारताख्यविषयता** वर्तते। संयोगे **संसर्गताख्यविषयता** वर्तते। भूतले **विशेष्यताख्यविषयता** वर्तते। एवं च घटनिष्ठ-प्रकारताख्यविषयतानिरूपकं ज्ञानम्, संयोगनिष्ठसंसर्गताख्यविषयतानिरूपकं ज्ञानम्, भूतलनिष्ठविशेष्यताख्यविषयतानिरूपकं ज्ञानम् इति सर्वत्र न्यायभाषया विवरणं भवेत्।



विषयताः यथा ज्ञानेन निरूप्यन्ते तथा परस्परम् अपि निरूप्यन्ते। प्रकारतानिरूपिता विशेष्यता इव विशेष्यतानिरूपिता प्रकारता इत्यपि सम्भवति। एवं संसर्गतायामपि। तथा च पूर्वोक्ते भूतलं घटवत् इति ज्ञाने घटनिष्ठप्रकारता-निरूपितभूतलनिष्ठविशेष्यतानिरूपकं ज्ञानम्, भूतलनिष्ठविशेष्यतानिरूपितघटनिष्ठ-प्रकारतानिरूपकं ज्ञानमिति वा वक्तव्यम्।

✲ विषयतारूपः सम्बन्धः तत्प्रभेदश्च निरूपितः। ताश्च तिस्रः अपि विषयताः परस्परमसमानाधिकरणाः। कोऽर्थः? न समानाधिकरणाः। **समानाधिकरण**मित्यस्य कस्यचित् अन्यस्य यत् अधिकरणं तत्र विद्यमानमित्यर्थः। समानमधिकरणं ययोः तौ समानाधिकरणौ।




चि.स.४२

अत्र घटत्वसमानाधिकरणा प्रतियोगिता। प्रतियोगितासमानाधिकरणं घटत्वम्। प्रकृते तु प्रकारतादयः तिस्रः विषयताः न परस्परं समानाधिकरणाः। घटत्वे प्रकारता, संयोगे संसर्गता, भूतले विशेष्यता च वर्तते। अतः नात्र द्वयोरेकमधिकरणम्। परन्तु विषयिता इति यः सम्बन्धः ज्ञाने विषयस्य, तस्य च ये अवान्तरभेदाः निरूपणसौकर्याय स्वीक्रियन्ते तेषु न परस्परम् असामानाधिकरण्यम्। किन्तु सर्वाः अपि विषयिताः ज्ञाने एव भवन्ति।

अत्रैतदुदाहरामः।

करदीपं[१] प्रज्वलय्य तस्य पुरतः अङ्गुष्ठवर्जम् अङ्गुलिचतुष्टयं प्रसारयामश्चेत् तिस्रः अर्चयः निर्गच्छन्ति।



चि.स.४३

तासु उपरितना अर्चिः घटे आपततीति सा प्रकारता, मध्यमा संयोगगता संसर्गता, निम्ना भूतलगता विशेष्यता इति भवेत्। एवञ्च प्रकारतादीनामसामानाधिकरण्यं समर्थितं भवति।

परन्तु तेषां भूतलादीनां त्रयाणां ये प्रतिबिम्बाः करदीपान्तर्गतकाचे[२] दृश्यन्ते ते तु एकत्रैव भवन्ति। यथा हि घटप्रतिबिम्बः काचे भवति, तथा संयोगप्रतिबिम्बः तत्रैव, एवं भूतलप्रतिबिम्बोऽपि। एषः प्रतिबिम्बः एव ज्ञाननिष्ठः विषयसम्बन्धः

१ - Torch २ - In the Flask

**विषयिता** इत्युच्यते। अत्रापि **विषयित्व**मिति सामान्या संज्ञा। **प्रकारिता, संसर्गिता, विशेष्यिता** इति च विशेषरूपाः। एते प्रतिबिम्बाः न प्रकारत्वादिवत् परस्परम् असमानाधिकरणाः किन्तु ज्ञानैकनिष्ठाः। आधाराधेयादिभावस्थले यथा आधेयताधिकरणतयोः निरूप्यनिरूपकभावः तथा विषयताविषयितयोरपि ज्ञातव्यः। तथा च भूतलं घटवत् इति ज्ञानस्य घटनिष्ठप्रकारतानिरूपितप्रकारिताश्रयः संयोग-निष्ठसंसर्गतानिरूपितसंसर्गिताश्रयः भूतलनिष्ठविशेष्यतानिरूपितविशेष्यिताश्रयः ज्ञानम् इति विवरणं भवति।

एवमेव घटः नीलरूपवान् इति ज्ञाने समवायसंसर्गमादाय, भूतलं घटाभाववत् इति ज्ञानस्थले दैशिकविशेषणतासंसर्गमादाय चिन्त्यम्।

प्रकृतमनुसरामः। सर्वोऽपि पदार्थः स्वस्मिन् तादात्म्यसम्बन्धेन भवति। तेन सम्बन्धेन नास्तीति अभाव एव अन्योन्याभावः, *भेदः*। स च चतुर्थः अभावः। तादात्म्यसम्बन्धस्य प्रतियोगितावच्छेदकत्वम् उपरिष्टात् साधयिष्यते इत्यलम्।



इति श्रीगोडाकुलाब्धिपूर्णेन्दुमहामहोपाध्यायश्रीसुब्रह्मण्यगुरुचरणान्तेवासिनः देवदत्तस्य कृतौ तर्कसङ्ग्रहव्याख्यायां **विद्याधरी**संज्ञकायाम् उद्देशग्रन्थः।

***

## ✳ द्रव्यनिरूपणम्

उद्देशग्रन्थानुसारेण आदौ पृथिवीं निरूपयति -

***तत्र गन्धवती पृथिवी। सा द्विविधा नित्याऽनित्या च। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति। विषयो मृत्पाषाणादिः*** इति।

गन्धः लक्ष्यभूतायाः पृथिव्याः लक्षणम् इत्युक्तम्। तत्रादौ किं लक्ष्यमिति निरूप्यते। जिज्ञासितः, *ज्ञातुमिष्टः* कश्चित् पदार्थः **लक्ष्य**मिति शास्त्रे व्यवह्रियते। तत्र विद्यमानः कश्चित् विलक्षणः पदार्थः, लोके, *वैशिष्ट्यम्, गुणः* इति वा प्रसिद्धः यः लक्ष्यसमानजातीयाः यावन्तः तेषु सर्वत्र स्यात्, एवं लक्ष्यविजातीयाः ये तेषु मा भूत् सः **तल्लक्षण**मिति उच्यते। यथा केनचित् गौः ज्ञातव्यास्ति। सा तर्हि जाता लक्ष्यम्। तस्याम् अस्ति सास्नापदार्थः[१]। सः गोजातीयेषु *गोत्वाश्रयेषु* यावत्सु अवश्यं भवति। गोविजातीयेषु, *गोत्वाभावाश्रयेषु* अश्वमहिष्यादिषु नैव अस्ति। तादृशं च सास्नापदार्थं दृष्ट्वा तद्वती या, सा गौः इति वेत्ति। ३७




चि.स.४४

१ - गोः गलाधोभागे लम्बमानः मृदुः अवयवविशेषः।

तथा च यत् सर्वेषु लक्ष्येषु भवति, अलक्ष्येषु न भवति तल्लक्षणम्। यः पदार्थः एवंविधो न भवति, सः न लक्षणं, किन्तु लक्षणाभासः।

## अव्याप्तिदोषः

कश्चित् पदार्थः न सर्वेषु लक्ष्येषु वर्तते, किन्तु केषुचिदेव, सः अव्याप्तः इत्युच्यते। यथा गोः श्वेतरूपं लक्षणमिति केनचित् उक्तम्। इदं च श्वेतरूपं गोजातीयायां श्वेतगवि एव वर्तते। कृष्णगवि नास्तीति तत्र अव्याप्तिरिति लक्षणदोषः भवति।

गावः




चि.स.४५

प्रकृतचित्रे आहत्य अष्टौ गावः सन्ति। तासु सर्वासु गोत्वमस्ति। तत्र प्रथमा, द्वितीया, चतुर्थी, षष्ठी च श्वेतरूपवती, परन्तु तृतीयायां, पञ्चम्यां, सप्तम्याम्, अष्टम्यां च गवि श्वेतरूपं नास्ति। अतः गोत्ववत्सु कासुचित् श्वेतरूपस्य अभावः वर्तते। अतः श्वेतरूपं न गोलक्षणं किन्तु अव्याप्तिदोषग्रस्तं *लक्षणाभासः*।

## अतिव्याप्तिर्दोषः

द्वितीयो दोषः अतिव्याप्तिः। एषः दोषः तस्मिन् भवति यः पदार्थः लक्ष्ये भवति, अलक्ष्येऽपि भवति। यथा गोः शृङ्गं लक्षणमुक्तं चेत् तत् लक्ष्यासु गोषु वर्तते, तथैव अलक्ष्येषु अजादिषु अपि वर्तते।

प्रकृतचित्रे शृङ्गं यद्यपि सर्वासु गोषु वर्तते, परन्तु अलक्ष्ये अजादौ अपि वर्तते इति तत्र अतिव्याप्तिः दोषः भवति। अतः नेदं लक्षणं किन्तु लक्षणाभासः।




चि.स.४६

## असम्भवदोषः

तृतीयो दोषः असम्भवः, यः धर्मः न कस्मिन् अपि लक्ष्ये भवति तस्मिन् आयाति। यथा केशराः *सिंहजटाः* गोः लक्षणमित्युक्तम्। तत्र गोजातीयायां कस्यामपि गवि सः धर्मः नास्ति इति तस्मिन् असम्भवो दोषः। 

पूर्वोक्तसास्नारूपधर्मः गवि वर्तते, अतः नासम्भवो दोषः, सर्वासु गोषु अस्तीति नाव्याप्तिदोषः, एवम् अलक्ष्येषु अजमहिषादिषु न वर्तते इति न अतिव्याप्तिर्दोष इति निर्दुष्टं सास्नावत्त्वं गोः लक्षणमिति उच्यते।

## ✳ नित्यत्त्वादिविभागः

प्रकृतमनुसरामः। गन्धः पृथिव्याः लक्षणम् इत्युक्तम्। लक्षणज्ञानेन सामान्यतः पृथिव्यां ज्ञातायां विशेषजिज्ञासा भवति तत्रोक्तं - **नित्या अनित्या च । नित्या परमाणुरूपा अनित्या कार्यरूपा** इति। यस्य उत्पत्तिः नास्ति अर्थात् प्रागभावो न भवति एवं ध्वंसोऽपि न भवति सः नित्यः। यथा आकाशः। न हि तस्य प्रागभावः ध्वंसो वा वर्तते। यस्य प्रागभावप्रतियोगित्वं ध्वंसप्रतियोगित्त्वं च सः अनित्यः।

अनित्यपृथिवीरूपस्य घटस्य प्रागभावोऽपि भवति ध्वंसोऽपि। अतः प्रागभावप्रतियोगित्वं घटे। ध्वंसप्रतियोगित्वमपि घटे। इदमेव घटे विद्यमानमनित्यत्वम्। एवमनित्यत्वे ज्ञाते तदभावः नित्यत्वं गगनादौ ज्ञातुं शक्यते। प्रागभावप्रतियोगित्वस्य अभावः, ध्वंसप्रतियोगित्वस्य च अभावः गगने अस्ति। इदमभावद्वयमेव नित्यत्वम्। तद्युक्ता नित्या पृथिवी परमाणुरूपा (पृ. १२) निरूपिता। तस्यामपि अस्ति इदमभावद्वयमिति परमाणोः नित्यत्वमागतम्। अनित्या तु घटादिरूपा उक्तैव।

## ✳ गन्धवती पृथिवी, गन्धवत्त्वं पृथिवीलक्षणम् इत्यनयोः भेदनिरूपणम्

उभयविधपृथिव्याः गन्धरूपस्य लक्षणस्य च अस्ति आधाराधेयभावः। तथा जलस्थले **शीतस्पर्शः अपां लक्षणमिति** अत्रापि शीतस्पर्शः आधेयः आपो *जलम्* अधिकरणम्। शीतस्पर्शे आधेयता, तन्निरूपिताधिकरणता जले, अधिकरणताश्रयः जलम्, अधिकरणताश्रयत्वं जले अस्तीति समन्वयः। **लक्षणस्य लक्ष्ये विद्यमानत्वं यत् वर्ण्यते सः समन्वयः इत्युच्यते।**



परन्तु सङ्ग्रहे गन्धवती पृथिवी, शीतस्पर्शवत्यः आपः इत्यादिलक्षणवाक्यानि लौकिकव्यवहारः इव भवन्ति। यथा सास्नादिमती गौः इति लौकिकव्यवहारः यथा वा नीलो घटः इति व्यवहारः। परन्तु नैयायिकव्यवहारे लक्षणवाचकं यत् पदं ततः परं त्वतलादिभाववाचकप्रत्ययं कृत्वा लक्ष्यवाचकपदोत्तरं च षष्ठीं प्रयुञ्जते। यथा **गन्धवत्त्वं पृथिव्याः लक्षणमिति।**

**तेषामयमाशयः।** लक्ष्यगतं कञ्चन असाधारणं धर्मं ज्ञात्वा आश्रयस्य *लक्ष्यस्य* ज्ञानं लक्षणविचारे इष्टम्। प्रथमान्तपदैः सास्नादिमती, गन्धवती, शीतस्पर्शवत्यः इत्यादिभिः तु लक्ष्यमेव निर्दिश्यते न तु तद्गतधर्मः। सास्नादिमती का? गौरेव। गन्धवती का? पृथिवी एव। शीतस्पर्शवत्यः काः? आपः एव। एवं च लक्ष्यवाचकपदस्य या विभक्तिः, तत्समानविभक्तिकं यदि लक्षणवाचकपदं भवेत् तदा विद्यमानोऽपि आधाराधेयभावः न बुद्ध्येत। अतः तज्ज्ञानाय लक्षणवाक्यं तथा स्यात् यथा स्पष्टः

धर्मबोधः स्यात्। अतः गन्धवती इत्यत्र यः मतुप्प्रत्ययः ततः भावप्रत्ययः कार्यः। तथा च गन्धवती + त्व = गन्धवत्त्व इति पदं भवति। तत्र विद्यमानेन भावप्रत्ययेन भावः *धर्मः* बोध्यते। स च भावः गन्धसमानकक्ष्यः[१] भवति। अतः गन्धवत्त्वम् इत्यस्य गन्धः एव अर्थः। अत एव प्रसिद्धः नियमः **मत्वर्थीयात् भावप्रत्ययः प्रकृत्यर्थं गमयतीति।**




चि.स.४७

गन्ध + मतुप् + त्व = गन्धः,

शीतस्पर्श + मतुप् + त्व = शीतस्पर्शः,

सास्ना + मतुप् + त्व = सास्ना।

तथा च सास्नावत्त्वम् इत्यनेन सास्ना, गन्धवत्त्वम् इत्यनेन गन्धः, शीतस्पर्शवत्त्वम् इत्यनेन शीतस्पर्शः बोध्यते। अतः आधाराधेयभावः, *धर्मधर्मिभावः* सुस्पष्टः भवति। इदमेव शास्त्रे **तटस्थलक्षण**मित्युच्यते। अत एव **रूपरहितस्पर्शवान् वायुः** इति सङ्ग्रहवाक्यं **रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षण**मिति ग्रन्थकारैः व्याख्यायते।

तथा च गन्धः आधेयश्चेत् तत्र आधेयता, तन्निरूपिता अधिकरणता पृथिव्याम्, अधिकरणतावती पृथिवी, अधिकरणतावत्त्वं पृथिव्यामिति गन्धनिष्ठाधेयतानिरूपिताधिकरणतावत्त्वं पृथिवीलक्षणं फलितम्।

अत्रैव च व्याख्यासौकर्याय आधाराधेयभावघटिते जलतेजसोः लक्षणे वर्णयामः। जललक्षणे शीतस्पर्शवत्यः आपः इत्यत्र शीतस्पर्शनिष्ठाधेयतानिरूपिताधिकरणतावत्त्वम् अपां *जलस्य* लक्षणं, तेजोलक्षणे च उष्णस्पर्शनिष्ठाधेयतानिरूपिताधिकरणतावत्त्वं तेजसः लक्षणम् इति वक्तव्यम्। चित्रप्रकारस्तु पूर्ववत् अनुसन्धेयः।



---

१ - Same floor

*शीतस्पर्शवत्य आपः। ताः द्विविधाः। नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः। पुनस्त्रिविधाः। शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः।*

*उष्णस्पर्शवत्तेजः। तद्द्विविधम्। नित्यमनित्यं च। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनस्त्रिविधम्। शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति। विषयश्चतुर्विधः- भौमदिव्योदर्याकरजभेदात्। भौमं वह्न्यादिकम्। अबिन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरुदर्यम्। आकरजं सुवर्णादि।*

*रूपरहितस्पर्शवान् वायुः। स द्विविधः। नित्योऽनित्यश्च। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः। पुनस्त्रिविधः। शरीरेन्द्रियविषयभेदात्। शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति। विषयो वृक्षादिकम्पनहेतुः। शरीरान्तःसञ्चारी वायुः प्राणः। स चैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते।*



**शरीरेन्द्रियविषयभेदात्** इति सङ्ग्रहग्रन्थः। इह ग्रहणसौकर्याय पृथिव्यादिचतुष्टयस्य पट्टिका प्रदर्श्यते।

| द्रव्यम् | शरीरम् | इन्द्रियम् | विषयः |
|---|---|---|---|
| पृथिवी | मनुष्यादीनाम् | घ्राणम् | मृत्पाषाणादिः |
| जलम् | वरुणलोके | रसनम् | सरित्समुद्रादिः |
| तेजः | आदित्यलोके | चक्षुः | भौमादिः |
| वायुः | वायुलोके | त्वक् | वृक्षादिकम्पनहेतुः |

जलपरमाण्वादौ अपि पूर्वोक्तं नित्यत्वम् इतरेषु अनित्यत्वं बोध्यम्। जलादिशरीराणां वरुणादिलोके स्थितिः पुराणप्रसिद्धा। नासिकादिकमधिष्ठानमाश्रयः।

तत्र स्थितानि इन्द्रियाणि गन्धादिप्रत्यक्षं जनयन्ति ।

तेजोग्रन्थे **अबिन्धनमिति** । आपः जलम् निमित्तकारणम् (पृ.११५) यस्य तत् विद्युदादि। सुवर्णस्य तेजोरूपता वेदबोधिता। अग्नेरपत्यं प्रथमं हिरण्यमितिश्रुतेः।

## ✳ दलसार्थक्यं नाम किम् ?

अथ वायुग्रन्थे विशेषः चिन्त्यते ।

***रूपरहितः स्पर्शवान् वायुः*** इति वायुलक्षणम् ।

पूर्वदर्शितरीत्या रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। (पृ.१९) रूपरहितः इत्यस्य रूपसामान्याभाववान् इत्यर्थः। स्पर्शवत्त्वं स्पर्श एव । अत्र रूपरहितत्वं स्पर्शवत्त्वम् इति द्वे दले *भागौ* वर्तेते। विषयेऽस्मिन् किञ्चित् विचार्यते।

कश्चित् सखायं गृहसङ्केतं पृच्छति। उत्तररूपेण सखा यदि स्वस्य पत्रसङ्केतं[१] वदति, सम्यगेव। ग्रहणसौकर्याय समीपस्थं किञ्चित् प्रसिद्धं स्थलम् अतिरिक्तमपि वदति चेत्, न दोषः। परन्तु अनावश्यकं यद्यत् गृहसमीपे वर्तते, तत् वक्तुमारभते चेत्, सः परिहास्यतां प्राप्नोति । अतः वक्त्रा बोधनीयं यत् वस्तु, तस्य सम्यक् परिज्ञानाय वस्तुसम्बन्धी आवश्यकः धर्मः निर्देष्टव्यः। परन्तु फल्गु *अनावश्यकं* नैव प्रयोक्तव्यम् इति लोकसिद्धोऽयं संव्यवहारः । किं वा शास्त्रीये विचक्षणव्यवहारे एकस्यैव वस्तुनः साधनाय *ज्ञापनाय* साधकद्वयं यदि वादी उपन्यस्येत्, पराभवयोग्यः भवेत्।

इत्थमेव वस्तुस्वरूपज्ञानाय लक्षणप्रयोगे कर्तव्ये एकेन दलेन वस्तुनः सम्यक् ज्ञानं भवति चेत् दलद्वयं न वक्तव्यम्, *न प्रयोक्तव्यम्* । एवमपि सङ्ग्रहकारेण दलद्वयं प्रयुक्तम्। तदुपयोगस्तु पूर्वोक्तातिव्याप्तिरूपदोषवारणाय।

कथम् उपयोगः ? उच्यते। रूपरहितत्वमेव यदि वायुलक्षणं स्यात् तदा पृथिव्यादित्रिकं विहाय सर्वस्मिन् जगति अतिव्याप्तिः, सर्वत्र रूपाभावस्य सत्वात् । अतः स्पर्शवत्त्वम् इति दलं दातव्यम् । स्पर्शवत्त्वम् आकाशादौ क्वापि नास्तीत्यतः न दोषः। स्पर्शवत्त्वमेव यदि वायुलक्षणं स्यात् तदा पृथिव्यामतिव्याप्तिः।

१ - Postal Address

अतः दलद्वयं मिलित्वा लक्षणमिति नातिव्याप्तिः। इत्थमेव सुखाद्युपलब्धि-साधनम् इन्द्रियं मनः इत्यादिषु दलद्वयघटितलक्षणेषु बोध्यं, वक्ष्यते च।




चि.स.४८

अयं च रूपाभावः रूपसामान्याभावः, रूपं नास्तीति प्रतीतिसिद्धः। तत्र सामान्याभावीयप्रतियोगितावच्छेदकत्वं प्रागुक्तं विचिन्त्य रूपत्वनिष्ठावच्छेदकता-निरूपितावच्छेद्यताश्रयप्रतियोगितानिरूपितानुयोगिताश्रयः अभावः इत्यर्थः लभ्यते।






चि.स.४९

अयं प्रागुक्तार्थदाढर्याय पुनःस्मारितः।

वायुविभागस्तु प्रागेव चिन्तितः। तत्र शरीरे सञ्चरतः वायोः स्थानभेदात् संज्ञाभेदमाह - **शरीरान्तःसञ्चारीति**। उपाधिः हृदयादिस्थानानि। अधिकमन्यत्र।

✳ क्रमप्राप्तम् आकाशं निरूपयति -

***शब्दगुणकमाकाशम्। तच्चैकं विभु नित्यञ्च*** इति।

शब्दः गुणः यस्य तत् शब्दगुणकम्। अत्र यद्यपि गन्धवती पृथिवी इति लक्षणकरणमिव शब्दवदाकाशमिति लक्षणकरणमेवोचितम् तथापि मीमांसकाः शब्दः द्रव्यमिति यत् अङ्गीकुर्वन्ति तन्निराकरणाय, तस्य गुणत्वव्यवस्थापनाय च लक्षणे गुणपदं स्थापितम्।

## सम्बन्धस्य अवच्छेदकत्वव्यवस्थापनम्

केचन समवायसम्बन्धावच्छिन्न-आधेयत्वलाभाय गुणपदमित्याहुः । **तेषामयमाशयः**। एक एव पदार्थः अनेकेषु पदार्थेषु विभिन्नैः सम्बन्धैः भवति । निदर्शनं घटं स्वीकुर्मः। सः संयोगसम्बन्धेन भूतले वर्तते। समवायसम्बन्धेन कपाले वर्तते। तादात्म्यसम्बन्धेन स्वस्मिन् भवति। वक्ष्यमाणेन कालिकसम्बन्धेन महाकाले वर्तते। विषयिता सम्बन्धेन च ज्ञाने वर्तते। अत्र चिन्त्यते।

चित्रे दर्शितरीत्या एकस्मिन् घटे अनेकाः आधेयताः सन्ति । तास्तु प्रत्येकं भिन्नाः। ज्ञाने अनुत्पन्ने[१] तन्निरूपिता आधेयता न भवति चेत् अपि कपालनिरूपिता आधेयता भवति। तदापि कपाले घटस्य सत्वात्। एवमन्यत्र ।




चि.स.५०

१ - यदा आत्मनि ज्ञानं नास्ति तदा इत्यर्थः ।

सर्वासामासां परस्परभेदसाधनाय सम्बन्धस्य उपयोगः भवति। कपालनिष्ठाधिकरणतानिरूपिता आधेयता ज्ञाननिष्ठाधिकरणतानिरूपिताधेयत्वात् भिन्ना। कुतः? समवायात्। समवायसम्बन्धो हि घटकपालयोः विद्यमानः, **इयमाधेयता ज्ञाननिरूपिताधेयत्वात् भिन्ना** इति बोधयति। इदं बोधकत्वमेव सम्बन्धस्य आधेयतावच्छेदकत्वम्।

पूर्वभागे (पृ.२८) घटनिष्ठप्रतियोगिता पटनिष्ठप्रतियोगितातः अन्या इति बोधनाय घटत्वपटत्वयोः उपयोगः दर्शितः। परन्तु इह एक एव घटः सर्वत्र वर्तते इति आधेयतावच्छेदकघटत्वमादाय आधेयत्वानां भेदं न साधयितुं प्रभवामः। कुतः? घटत्वमपि खलु अवच्छेदकम् एकम्। अतः सर्वा आधेयताः घटत्वावच्छिन्नाः। अतः न तेन भेदसिद्धिः।

अत्र च समवायोपयोगः। समवायः, कपालनिरूपिता आधेयता भिन्ना इति ज्ञापयति अतः सः आधेयतावच्छेदकः। तेन अवच्छिन्ना, *अन्यत्वेन बोधिता,* आधेयता। तथा च पूर्ववत् समवायनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती आधेयता, आधेयतानिष्ठावच्छेद्यतानिरूपितावच्छेदकतावान् समवायः इति परिष्कर्तव्यम्। इत्थमेव विषयितासम्बन्धावच्छिन्नघटनिष्ठाधेयतानिरूपिताधिकरणतावत् ज्ञानम्, कालिकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावान् कालः, संयोगसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावत् भूतलम् इत्येवं ज्ञातव्यम्।

अयमपरो विशेषः यत् समवायादीनामवच्छेदकत्वेऽपि घटपटादिषु प्रत्येकं विद्यमानाः याः कपालतन्त्वादिनिरूपिताः आधेयताः ताः सर्वाः अपि समवायसम्बन्धावछिन्नाः इति तासां भेदज्ञापनाय घटत्वपटत्वादीनाम् अस्ति अपेक्षा।

एवं सति समवायेऽपि अवच्छेदकता, घटत्वेऽपि अवच्छेदकता इति वचने असौकर्यम्। अतः अनयोः अवच्छेदकत्वयोः निरूपणसौकर्याय समवायनिष्ठावच्छेदकतायाः **सांसर्गिकावच्छेदकता** इति व्यवहारो दृश्यते।

तथा च समवायनिष्ठसांसर्गिकावच्छेदकतानिरूपितावच्छेद्यतावती एवं

घटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती या घटनिष्ठाधेयता तन्निरूपिताधिकरणतावान् कपालः इति निष्कर्षः फलति।

तथा च लघुना उपायेन -

१) विषयतासम्बन्धावच्छिन्नघटत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावत् ज्ञानम्।

२) कालिकसम्बन्धावच्छिन्नघटत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावान् कालः।

३) संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावत् भूतलम् इति वक्तुं शक्नुमः।

## ✳ प्रतियोगितायाः सम्बन्धावच्छिन्नत्वं, तुल्यन्न्यायात्

अयमेव चोपायः **प्रतियोगित्वस्थले**ऽपि ज्ञातव्यः। तत्र भूतले समवायेन **घटो** नास्ति, कपाले संयोगेन **घटो** नास्ति, काले विषयतासम्बन्धेन **घटो** नास्तीति अभावान् यदि चिन्तयामः तदा तस्य तस्याभावस्य प्रतियोगिताः तिस्रः घटे एव वर्तन्ते। तासां च परस्परं भेदज्ञापनाय न घटत्वोपयोगः। सर्वत्र तस्यैकस्यैव अवच्छेदकत्वात्।

अतः येन सम्बन्धेन नास्तीति व्यवहारः कृतः, तं सम्बन्धमादायैव प्रतियोगिताभेदः अधिगन्तव्यः। तत्प्रकारश्च समवायसम्बन्धनिष्ठसांसर्गिकावच्छेदकतानिरूपितावच्छेद्यतावती घटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती या घटनिष्ठप्रतियोगिता तादृशप्रतियोगिता निरूपितानुयोगिताश्रयः अभावः भूतले समवायेन घटो नास्तीति प्रतीतिसिद्धः।

इहापि अभावस्य वृत्तित्वं स्वरूपेणेति प्राक् निर्णीतम्। अतः पूर्वोक्ततादृशाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावत् भूतलमिति समवायेन भूतले घटो नास्तीत्यस्य अर्थः।

संयोगसम्बन्धनिष्ठसांसर्गिकावच्छेदकतानिरूपितावच्छेद्यतावती अथ च घटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती या घटनिष्ठप्रतियोगिता तादृशप्रतियोगितानिरूपितानुयोगिताश्रयाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावत्

कपालम् इति संयोगेन कपाले घटो नास्तीत्यस्य अर्थः।

काले विषयतासम्बन्धेन घटो नास्तीति ज्ञाने भासमानमभावमादाय






चि.स.५१

विषयतासम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगितानिरूपकाभावनिष्ठस्वरूप-सम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावान् कालः इति सङ्क्षेपतः वक्तुं शक्नुमः। एवमेव वायौ समवायेन रूपं नास्ति, तन्तौ संयोगेन पटो नास्ति, गगने कालिकेन घटत्वं नास्तीत्यादिप्रत्ययाः तत्र तत्र प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वं धर्मविशेषावच्छिन्नत्त्वं च निवेश्य अभ्यस्याः।

एवं घटः पटो न इत्यत्रापि (पृ.३२) तादात्म्यसम्बन्धः भवति प्रतियोगितावच्छेदकः। तथा च घटत्वावच्छिन्नतादात्म्यावच्छिन्नप्रतियोगिताकाभावः य भेदः तद्वान् पटः इति प्रतियोगितायाः तादात्म्यावच्छिन्नत्वसिद्धिः।

प्रकृते आधेयत्वस्थले समवायादिसम्बन्धैः घटः कपालादिषु इव शब्दोऽपि

समवायेन आकाशे, कालिकेन काले, विषयतासम्बन्धेन स्वविषयकप्रत्यये वर्तते इति बहुविधाधेयताः शब्दे वर्तन्ते। तासु या समवायसम्बन्धावच्छिन्नाधेयता तन्निरूपिताधिकरणतावत्त्वमेव प्रकृते लक्षणमिति बोधनाय **गुणपदमुपात्तम्।** गुणगुणिनोः समवायस्य प्राक् व्यवस्थापनेन, गुणपदेन तयोः यः समवायसम्बन्धः तस्यैव उपस्थित्या तत्सम्बन्धावच्छिन्नाधेयत्वलाभः इति। इत्थमेव च ज्ञानाधिकरणमात्मा इत्यत्रापि अधिकरणपदनिवेशप्रयोजनं वक्ष्यते। (पृ.६२)

लक्षणवाक्येन आकाशे ज्ञाते तत् किं पृथिव्यादिवत् नाना उत एकमिति जिज्ञासायामाह **तच्चैक**मिति। **अयमाशयः।**

## ✳ प्रतिनियतग्राह्याः गुणाः

रूपं रसः गन्धः स्पर्शः शब्दश्चेति गुणाः प्रतिनियतग्राह्याः इति शास्त्रे व्यवह्रियन्ते। तेषाम् एकैकस्य एकैकमेव इन्द्रियं ग्राहकम्, वक्ष्यमाणप्रत्यक्षात्मकज्ञानजनकम्। अन्येऽपि सुखदुःखादयः ये आत्मविशेषगुणाः (पृ.५२, ७०) तेषां प्रत्यक्षजनकत्वेन मनः इति अतिरिक्तमिन्द्रियमनुमीयते।



**प्रतिनियतग्राह्याः गुणाः - तद्ग्राहकाणि इन्द्रियाणि**

| | | |
|---|---|---|
| रूपम् | ⟶ | चक्षुः |
| रसः | ⟶ | रसनम् |
| गन्धः | ⟶ | घ्राणम् |
| स्पर्शः | ⟶ | त्वक् |
| शब्दः | ⟶ | श्रोत्रम् |
| षट् ज्ञानाद्यात्मगुणाः | ⟶ | मनः |

चि.स.५२

तथा च पूर्वोक्तगुणानां ग्राहकाणि क्रमेण चक्षूरसनघ्राणत्वक्श्रोत्राणि[१], मनश्च षष्ठमिति आहत्य षडिन्द्रियाणि। आदिमानि पञ्च बहिरिन्द्रियाणि बहिर्भूतान् घटादीन्

१ - सर्वत्र प्राण्यङ्गत्वात् एकवद्भावः प्राप्तः। परन्तु घ्राणभिन्नानां संयुक्तद्रव्यत्वात् अवयवत्वाभावः, ''घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः'' इति न्यायसूत्रादुन्नीतः सौकर्याय आवृतः।

प्रकाशयन्ति। आभ्यन्तरं भवति मनः आत्मानं तद्गतगुणान् च प्रकाशयति।

तेषु चक्षुस्त्वङ्मनांसि गुणस्येव तदाश्रयद्रव्यस्यापि प्रत्यक्षं जनयन्ति। चक्षुषा रूपस्य इव तदाश्रयस्य घटादेरपि प्रत्यक्षोत्पादनात्। भवति हि उन्मीलितनयनस्य पुंसः नीलो घटः इति प्रत्यक्षात्मकं ज्ञानम्। एवमेव त्वगिन्द्रियमनसोः अपि आश्रयग्राहकत्वं बोध्यम्। अन्येषु त्रिषु इन्द्रियेषु रसनेन्द्रियघ्राणेन्द्रिययोः गुणमात्रग्राहकता, न तु द्रव्यमपि ताभ्यां गृह्यते। यद्यपि गुडः चक्षुषा गृह्यते, इति न सः अतीन्द्रियः तथापि घ्राणरसनयोः गुणाश्रयग्राहकत्वं नास्ति। घ्राणं गन्धस्य रसना रसस्य च जनयति प्रत्यक्षम्।

| द्रव्यगुणोभयग्राहकाणि | गुणमात्रग्राहकाणि |
|---|---|
| चक्षुः | घ्राणम् |
| त्वक् | रसनम् |
| मनः | श्रोत्रम् |

शिष्टं श्रोत्रेन्द्रियं, कर्णपुटेन पृथक्कृतः आकाशदेश एव। तत्तु शब्दस्यैव प्रत्यक्षं जनयति। न तु आश्रयस्य। कुतः? आश्रयस्य आकाशस्य अतीन्द्रियत्वात्। यस्मिन् हि परमाणुपरिमाणातिरिक्तपरिमाणं उद्भूतरूपं (पृ.५३) च भवति तस्यैव द्रव्यस्य बहिरिन्द्रियेण प्रत्यक्षं भवति नान्यस्य इति च निर्णीतम्।




चि.स.५३




चि.स.५४

## ✳ द्रव्यप्रत्यक्षं केन भवति ?

घटे उद्भूतरूपमस्ति परमाणुपरिमाणातिरिक्तं मध्यमपरिमाणं च वर्तते इति तस्य चक्षुषा त्वचा च प्रत्यक्षं भवति।

परमाणुद्व्यणुकयोः उद्भूतरूपमस्ति परन्तु परमाणुपरिमाणातिरिक्तपरिमाणं न वर्तते इति तयोः प्रत्यक्षं, *साक्षात्कारः* न भवति। एवमेव घ्राणेन्द्रियादीनि पृथिव्यादि-द्रव्यरूपाणि अपि न प्रत्यक्षाणि । तत्र पृथिवीत्वस्य सत्वेन रूपवत्त्वानुमानेऽपि[2] अतीन्द्रियत्वमालोच्य न तत् रूपं वक्ष्यमाणम् (पृ.५३) उद्भूतरूपमिति निर्धारितम् । अतः उद्भूतरूपाभावात् तानि अपि अतीन्द्रियाणि। मनसस्तु न उद्भूतरूपं नापि

१ - द्वाभ्यां परमाणुभ्यां जायमानः आद्यः अवयवी ।

२- पृथिवीत्वं भवति यत्र तत्र रूपमवश्यं भवतीति नियमः।

उक्तपरिमाणमिति सुदूरं तस्य प्रत्यक्षम्। शब्दाश्रयस्य गगनस्य वायोश्च परमाणुपरिमाणातिरिक्तपरिमाणं वर्तते परन्तु न तत्र रूपमस्ति इति तयोरपि प्रत्यक्षं न भवति।

✳ किं तर्हि तयोः सत्वे प्रमाणम्? अनुमानम्। पृथिव्यादित्रिके यादृशस्पर्शः वर्तते तद्विजातीयस्पर्शः अनुभूयमानः यः स आश्रयभूतद्रव्यमपेक्षते इति तदाश्रयतया वायुः सिद्ध्यति। एवमेव शब्दरूपगुणस्य आश्रयभूतं द्रव्यम् आवश्यकमिति तदाश्रयतया आकाशः सिद्ध्यति।

तत्र च अनुमानेन[1] सिद्ध्यतः पदार्थस्य बहुत्वज्ञानाय काचन साधकयुक्तिरस्ति चेत् तस्य बहुत्वं स्वीक्रियते एव। अनुभूयते च अनुमितस्यापि वायोः नानात्वम्। अन्यो हि समीरणः वृक्षादिकम्पनहेतुः। अन्यश्च शरीरान्तःसञ्चारी प्राणः। यथा वा आत्मसुखादिप्रत्यक्षाय चक्षुरादिभिन्नमिन्द्रियं मनोरूपम् अनुमितम्। तस्य अनेकत्वमपि आवश्यकम्। एकेनैव परमाणुरूपेण मनसा सर्वेषामात्मनां युगपत् सुखदुःखाद्यसम्भवात्। अतः मनसः अनुमानसिद्धत्वेऽपि तस्य बहुत्वं स्वीक्रियते। न तथा आकाशस्य एकत्वेन काचन हानिरस्ति। इदमेव मनसि निधायोक्तं **तच्चैकमिति**।(पृ.४९)



अनुमितिविषयता अनेकेषु स्वीक्रियते चेत् बुद्धेः यः क्लेशः तत् गौरवमित्युच्यते। अनुमितिविषयतायाः एकस्मिन् स्वीकारे बुद्धेः सौकर्यं लाघवमित्युच्यते। तादृशलाघवमालोच्य [2]आकाशादीनामेकत्वमादृतम्। तद्वदेव च तेषामनित्यत्वे अवयवादिकल्पना, प्रागभावः ध्वंसः च स्वीकर्तव्यो भवतीति गौरवम्। नित्यत्वे बाधकमपि नास्तीति लाघवात् तेषां नित्यत्वमेव स्वीक्रियते।

✳ आकाशस्य परिमाणमाह - **विभ्विति**। विभुत्वं परममहत्परिमाणवत्त्वम्। यत्परिमाणापेक्षया उत्कृष्टं महत्परिमाणं न भवति तत्।

सङ्ग्रहे यद्यपि चतुर्विधानि परिमाणानि वक्ष्यन्ते (पृ.९३) तथापि आश्रयानुरोधेन अन्योऽपि विभागः कर्तव्यो भवति। स च अणुपरिमाणं, परममहत्परिमाणं, मध्यमपरिमाणम्।

---

१ - धूमज्ञानेन यत् वह्नेः ज्ञानं जायते सा अनुमितिः। तस्य कारणं धूमज्ञानम् अनुमानम्। एवं सर्वत्र।

२ - आदिपदेन कालः दिक् च ग्राह्या।

| परमाणुपरिमाणम् | परममहत्परिमाणम् | मध्यमपरिमाणम् |
|---|---|---|
| पृथिव्यादिचतुष्टयस्य परमाणवः द्व्यणुकानि च । मनांसि | आकाशः कालः दिक् जीवाः ईश्वरः | घटपटादयः । पृथिव्यादिचतुष्टयस्य विभागग्रन्थे शरीरेन्द्रियविषयभेदात् इत्यनेन ये दर्शिताः ते सर्वेऽपि । |

पूर्वोक्ता लाघवयुक्तिः कालदिशोः एकत्वसाधनाय नित्यत्वसाधनाय च ज्ञातव्या। तयोरपि अनुमानेन साधनात्, अनुमानेन सिद्ध्यतः पदार्थस्य नित्यत्वे एकत्वे च लाघवात्। मनस्तु अनुमितमपि नैकं, बाधकसत्वादिति प्रागावेदितमेव। लक्षितस्यापि चाकाशस्य एकत्वात् विषयविभागः न कृतः।

अस्ति तथापि श्रोत्रेन्द्रियमाकाशरूपम्। कुतः तन्नोक्तम् ? उच्यते। घ्राणेन्द्रियात् प्रभृति चतुर्णामिन्द्रियाणामुत्पत्तिः अवयवैः जायते । तत्र प्रक्रिया घटादिद्रव्ये यादृशी तादृशी एव । तथा हि - द्वाभ्यां पृथिवीपरमाणुभ्यां पृथिवीद्व्यणुकमुत्पद्यते । त्रिभिः द्व्यणुकैः त्र्यणुकमुत्पद्यते। चतुर्भिः त्र्यणुकैः चतुरणुकम् इत्येवमवयविनां घटादीनामुत्पत्तिः भवति। तत्र पृथिवीपरमाणुद्व्यणुकयोः उद्भूतरूपसत्वेऽपि परमाणुपरिमाणातिरिक्त-परिमाणाभावात् प्रत्यक्षं न भवति इति प्रागुक्तम्।(पृ.५१) त्र्यणुकात् प्रभृति चरमावयविपर्यन्तं सर्वेषु महत्त्वोद्भूतरूपयोः सत्त्वात् भवति तेषां प्रत्यक्षम्। एवं जलादौ ।

परन्तु घ्राणादीन्द्रियाणां चतुर्णामपि इन्द्रियान्तरेण स्वेन वा प्रत्यक्षं न भवतीति आनुभविकम्। तन्निर्वाहाय, तेषामवयवपरम्परायां द्व्यणुकादिषु कुतश्चित् विरोधवशात् उद्भूतरूपं न उत्पद्यते इति स्वीक्रियते।

किमिदम् उद्भूतरूपम् ? उच्यते। द्विविधं हि रूपं उद्भूतम्, अनुद्भूतं च। येन द्रव्यप्रत्यक्षं भवति तदुद्भूतम्। यस्मिन् सत्यपि द्रव्यप्रत्यक्षं न भवति तत् अनुद्भूतम्। घटादौ उद्भूतरूपम्। घ्राणादौ च अनुद्भूतम्।

एवं च घटावयवपरम्परागतपञ्चाणुकादिवत् इमानि इन्द्रियाणि अपि महत्त्ववन्ति *मध्यमपरिमाणवन्ति* । परन्तु उद्भूतरूपाभावात् अतीन्द्रियत्वं सिद्ध्यति।

| | | |
|---|---|---|
| पृथिवीपरमाणुद्व्यणुकादिपरम्परया | - | घ्राणेन्द्रियम् |
| जलपरमाणुद्व्यणुकादिपरम्परया | - | रसनेन्द्रियम् |
| तेजःपरमाणुद्व्यणुकादिपरम्परया | - | चक्षुरिन्द्रियम् |
| वायुपरमाणुद्व्यणुकादिपरम्परया | - | त्वगिन्द्रियम् |

एतादृशोत्पत्तिपरम्परा न श्रोत्रेन्द्रिये घटते । तस्य आकाशरूपत्वस्वीकारात् । आकाशस्य एकत्वेन परमाणुद्व्यणुकादिपरम्परया श्रोत्रस्य उत्पत्तिः न सम्भवति । अतः श्रोत्रस्य नित्यत्वात् इतरजन्येन्द्रियवत् अस्य पृथगुल्लेखः न कृतः ।

परन्तु कस्यचित् पुंसः एव शब्दप्रत्यक्षम्, अन्यस्य न इति व्यवस्थानिर्वाहाय तत्तच्छरीरभेदेन श्रोत्रेन्द्रियाणि अपि अनन्तानि साधनीयानि। अतः कर्णशष्कुली *कर्णपुटं* सर्वत्र विद्यमानस्य आकाशस्य अवच्छेदकं *भेदकं* भवतीति कल्प्यते इत्यलम् ।



पृथिव्यादिभूतद्रव्याणि (पृ.३४६)निरूप्य सम्प्रति कालं लक्षयति अतीतादीति ।

*✳ **अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ।***

घटः अतीतः *न सम्प्रति अस्ति,* घटः वर्तते, घटः भविष्यति इत्यादिप्रयोगाः अस्माभिः क्रियन्ते । ते च न पूर्वोक्तैः द्रव्यैः वर्णयितुं शक्याः । अतः तादृशव्यवहार-सम्पादकम् अतिरिक्तं द्रव्यमनुमीयते कालसंज्ञकम् । इदमेव च लक्षणवाक्ये उक्तम् **अतीतादिव्यवहारहेतुः कालः** इति।

सङ्ग्रहे व्यवहार इति पदघटितानि अष्टौ लक्षणानि सन्ति । एकत्र सम्यक् अवगमने सर्वत्र तयैव रीत्या चिन्तनं सुकरम्। तत्र व्यवहारपदस्य ज्ञानजनकशब्दप्रयोगः इत्यर्थः । यथा केनचिदुक्तं घटः अतीत इति। तादृशभाषणं श्रुत्वा श्रोतुः अतीतघटविषयकं ज्ञानमुत्पद्यते। अर्थात् घटनिष्ठविशेष्यतानिरूपकम् अतीतत्वनिष्ठप्रकारतानिरूपकं

ज्ञानमुत्पद्यते । अतः तथाविधज्ञानं प्रति शब्दप्रयोगः कारणम्। तादृशश्च शब्दप्रयोगः कालाख्यं द्रव्यम् अस्वीकृत्य न कर्तुं शक्यः इति तं प्रति कारणत्वमेव कालस्य लक्षणम्। इत्थश्च तत्र चित्रं भवेत्।




चि.स.५५

## कालक्षणे अवच्छेद्यावच्छेदकभावः

प्रकारत्वविशेष्यत्वस्थलेऽपि सर्वत्र अवच्छेद्यावच्छेदकभावः ज्ञातव्यः । तथा च अतीतत्वं प्रकारश्चेत् अतीतत्वे प्रकारता, प्रकारतावच्छेदकं तद्वृत्तिधर्मः अतीतत्वत्वम्। घटे विशेष्यता, विशेष्यतावच्छेदकं घटत्वम्। तादृशप्रकारताविशेष्यतयोः निरूपकं ज्ञानम् अतितो घटः इति, तादृशज्ञानजनकः यदि शब्दप्रयोगः तर्हि, ज्ञानं जन्यं, जन्यता ज्ञाने, जन्यतावच्छेदकं ज्ञानत्वं तादृशज्ञानत्वावच्छिन्नजन्यतानिरूपित-जनकता शब्दप्रयोगे जनकतावच्छेदकं शब्दप्रयोगत्वं, तदवच्छिन्नजनकताश्रयः यः शब्दप्रयोगः सः कालं विना न सम्भवति इति कालः तस्य जनकः, तन्निरूपितजन्यतापि शब्दप्रयोगे इति एकत्रैव शब्दप्रयोगे ज्ञाननिष्ठकार्यतानिरूपितकारणता वर्तते, एवं कालनिष्ठकारणतानिरूपितकार्यताऽपि वर्तते । सा कार्यताऽपि शब्दप्रयोगत्वावच्छिन्ना। तादृशकार्यतानिरूपितकारणताश्रयः कालः, कारणताश्रयत्वं कालस्य लक्षणम्।

[१]तथा च आहत्य अतीतत्वत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्न-विशेष्यतानिरूपकज्ञाननिष्ठज्ञानत्वावच्छिन्नकार्यतानिरूपितशब्दप्रयोगत्वावच्छिन्न-

१ - भावप्रत्ययात् भावप्रत्ययः नैयायिकव्यवहारात् ।